BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1339.

स्मृतिप्रकाशः ।




# SMRITIPRAKASHA.

BY

VASUDEVA RATHA.

EDITED BY

[illegible]YA PANDIT SADASHIVA MISRA, PURI.

FASCICULUS I.

Calcutta.

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
5, Nandakumar Chawdhury's 2nd Lane.
AND PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.
1912.

श्रीगणेशाय नमः ।

# स्मृतिप्रकाशः ।

आद्ये श्रुतिस्मृती चोभे यस्य सर्व्वेश्वरस्य वै ।
सच्चिदानन्दरूपाय तस्मै श्रीहरये नमः ॥

---

## अथ काला निरूप्यन्ते । तत्रादौ सम्वत्सरनिर्णयः ।

सम्वत्सरो नाम मासायनाद्यवयवी कालविशेषः सम्यक् वसन्त्यत्र ऋतुमासादय इति व्युत्पत्तेः, स च द्वादशमासात्मकः,

"...मासाः सम्वत्सर" इति श्रुतेः ।

...स चैवंविधेन सम्वत्सरस्त्रिविधः ।

...मासानां तु प्रभेदतः ।

...सौराख्यास्त्रयः सम्वत्सरा इमे ॥"

तत्र चान्द्रः सम्वत्सरः चैत्रशुक्लप्रतिपदादिः फाल्गुनकृष्ण...
तत्र शुक्लप्रतिपदादितिथीनां [illegible]

अयनिष्पन्नो यः स चान्द्रः । द्वादशसूर्य्यसंक्रमणैर्निष्पन्नो यः स-सौरः । सोमयागे सवनत्रयस्य अहोरात्रनिष्पाद्यत्वात् षष्ट्यधिक-शतत्रयसंख्याकैर्निष्पन्नो यः स सावनः, तत्र द्वादशमासैः साध्यं संवत्सरसत्रं, तस्य सावनेनैव सिद्धिः, चान्द्रस्य षड्भिरहोरात्रै-र्न्यूनत्वात्, सौरस्य सपादैः पञ्चभिरहोरात्रैरधिकत्वात् ।

---

## अथ अयननिर्णयः ।

अयनं द्विविधं दक्षिणोत्तरसंज्ञकं, यान् षण्मासान् दक्षिणा-दित्य एति, यान् षाण्मासानुदगादित्य एतीति ।

उदगायनदक्षिणायनयोर्विधिनिषेधावाह,

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणस्य मुखे कुर्वन् न तत्फलमवाप्नुयात् ॥
मातृभैरववाराहनरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥ इति ।

---

## अथ ऋतुनिर्णयः ।

स च षड्विधः, "षड् वा ऋतव"
"द्वादशमासाः पञ्चर्त्तव" इति, तत्र
विवक्षितम् ।

तथाच श्रुतिः, "द्वादशमासाः पञ्चर्त्तव" इति, हेमन्त-शिशिरयोः समासेनेति ।

ऋतूनां मासद्वयात्मकत्वम् अग्निचयने ऋतव्येष्टकोपधान-मन्त्रे श्रूयते, "द्वन्द्वमुपदधाति तस्माद्द्वन्द्वमृतव" इति। तथाच, इष्टकोपधानमन्त्रे श्रूयते, "मधुश्च माधवश्च वासन्तिका ऋतू, शुक्रश्च शुचिश्च ग्रीष्मा ऋतू, नभश्च नभस्यश्च वार्षिका ऋतू"।

"इषश्चोर्जश्च शारदा ऋतू, सहश्च सहस्यश्च हैमन्तिका ऋतू, तपश्च तपस्यश्च शैशिरा ऋतू"।

ते च वसन्तादयो द्विविधाः, चान्द्राः सौराश्च, चैत्रादय-श्चान्द्राः।

तथोक्तम्,—

मधुश्च माधवश्चेत्यादिना मध्वादीनां चैत्रादिपर्यायत्वात्।

"चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेदि"त्यादि-वचनेन, एतेषां चैत्राद्यात्मकानां चन्द्रगतिपरिलक्ष्यत्वाच्चान्द्रत्वं, सौरेषु तु मीनमेषयोर्मेषवृषयोर्वा वसन्त इत्याभिधानात् मीना-वं मेषादित्वं च वसन्तस्य वैकल्पिकं, तथाच तदनुसारेण ग्रीष्मादयोऽपि

विनियोगश्चैषाम्।

तत्र श्रुतिः—

"वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य"-इति।

स्मृतिरपि—"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्य"मिति।

यनिष्पन्नो यः स चान्द्रः। द्वादशसूर्य्यसंक्रमणैर्निष्पन्नो यः स सौरः। सोमयागे सवनत्रयस्य अहोरात्रनिष्पाद्यत्वात् षष्ठ्यधिकशतत्रयसंख्याकैर्निष्पन्नो यः स सावनः, तत्र द्वादशमासैः साध्यं संवत्सरसत्रं, तस्य सावनेनैव सिद्धिः, चान्द्रस्य षड्भिरहोरात्रैर्न्यूनत्वात्, सौरस्य सपादैः पञ्चभिरहोरात्रैरधिकत्वात्।

---

## अथ अयननिर्णयः।

अयनं द्विविधं दक्षिणोत्तरसंज्ञकं, यान् षण्मासान् दक्षिणादित्य एति, यान् षाण्मासानुदगादित्य एतीति।

उदगायनदक्षिणायनयोर्विधिनिषेधावाह,

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ।
दक्षिणस्य मुखे कुर्वन् न तत्फलमवाप्नुयात्॥
मातृभैरववाराहनरसिंहत्रिविक्रमाः।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने॥ इति।

---

## अथ ऋतुनिर्णयः।

स च षड्विधः, "षड् वा ऋतव"
"द्वादशमासाः पञ्चर्त्तव" इति, तत्र
विवक्षितम्।

तथाच श्रुतिः, "द्वादशमासाः पञ्चर्त्तव" इति, हेमन्तशिशिरयोः समासेनेति।

ऋतूनां मासद्वयात्मकत्वम् अग्निचयने ऋतव्येष्टकोपधानमन्त्रे श्रूयते, "द्वन्द्वमुपदधाति तस्माद्द्वन्द्वमृतव" इति। तथाच, इष्टकोपधानमन्त्रे श्रूयते, "मधुश्च माधवश्च वासन्तिका ऋतू, शुक्रश्च शुचिश्च ग्रीष्मा ऋतू, नभश्च नभस्यश्च वार्षिका ऋतू"।

"इषश्चोर्जश्च शारदा ऋतू, सहश्च सहस्यश्च हैमन्तिका ऋतू, तपश्च तपस्यश्च शैशिरा ऋतू"।

ते च वसन्तादयो द्विविधाः, चान्द्राः सौराश्च, चैत्रादयश्चान्द्राः।

तच्चोक्तम्,—

मधुश्च माधवश्चेत्यादिना मध्वादीनां चैत्रादिपर्यायत्वात्।

"चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेदि"त्यादिवचनेन, एतेषां चैत्राद्यात्मकानां चन्द्रगतिपरिलब्धत्वाच्चान्द्रत्वं, सौरेषु तु मीनमेषयोर्मेषवृषयोर्वा वसन्त इत्याभिधानात् मीनात्वं मेषादित्वं च वसन्तस्य वैकल्पिकं, तथाच तदनुसारेण ग्रीष्मादयोऽपि।

विनियोगश्चैषाम्।

तत्र श्रुतिः—

"वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य"-इति।

स्मृतिरपि—"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्य"मिति।

---

## अथ मासनिर्णयः ।

स च मासश्चतुर्विधः, तत्र यावता कालेन चन्द्रस्य वृद्धिक्षयौ स चान्द्रो मासः ।

तथोक्तं,—

मास्यन्ते परिमीयन्ते स्वकालाद्वृद्धिहानितः ।
मासा एते स्मृता ज्ञेयास्त्रिंशत्तिथिसमन्विताः ॥

सूर्यस्य राशिगनियत्र मीयते स सौरः, अहोरात्राणां त्रिंशत्-संख्या यत्र परिमीयते स सावनः ।

तदुक्तं,—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥ इति ।

नाक्षत्रमपि मासं केचिद्वदन्ति,—

"सर्वर्क्षपरिपूर्णेषु नाक्षत्रो मास उच्यते," ।

इति तत्र सौरमासस्य आद्यन्तौ मेषादिराशीनामाद्यन्ताभ्यां व्यवस्थितौ, सावने पुरुषेच्छादिर्नियामकः, नाक्षत्रे नक्षत्रं नियामकम् ।

चान्द्रो द्विविधः दर्शान्तः पूर्णिमान्तो वेति ।

तथाच श्रुतिः "अमावास्यया हि मासान् सम्पाद्य अहरुत्सृजन्ति, अमावस्यया हि मासान् पश्यन्ति, पौर्णमास्या हि मासान् सम्पाद्य अहरुत्सृजन्ति, पौर्णमास्या हि मासान् सम्पश्यन्ती"ति ।

तत्र मासस्य पूर्णिमान्तत्वे श्रुतेः कटाक्षो भूयान् ।

तथाच, "चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी"त्यादौ पूर्णि-मान्तमासोऽभिप्रेतः ।

स्मृतौ च—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । इति ।

दर्शान्तमासे तु भाद्रपदकृष्णपक्ष इत्युच्यते ।

तथा, जयन्तीप्रकरणे,—

"मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके" इति ।

यतिधर्मे तु, —"ऋतुसन्धिषु वापयेदि"ति पूर्णिमायां वपनं कुर्वन्ति," तस्माद्दर्शान्तत्वपूर्णमान्तत्वयोः समो विकल्पः, अनुष्ठाने तु वचनविशेषाद्व्यवस्थेति ।

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासाभ्यां तथैव नृपवैश्ययोरिति ॥

तथा,—

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिकेऽपि तु कार्य्ये च चान्द्रो मासः प्रशस्यते ॥

पूर्णिमान्तदर्शान्तमासानां चैत्रादिसंज्ञा नक्षत्रप्रयुक्ता, तन्नक्षत्रेण युक्तः काल इति, चित्रायुक्ता पौर्णमासी चैत्रीति व्युत्पन्नत्वात् । एवं वैशाख्यादिषु, तत्र चैत्रादिश्रावणान्तानां चित्रादिनक्षत्रद्वन्द्वं प्रयोजकं, भाद्रपदाश्वयुजयोस्तु शतभिषक्रेवत्यादित्रिकम् । कार्त्ति-कादीनां माघान्तानां कृत्तिकादिद्वन्द्वं, फाल्गुनस्य पूर्व्वफाल्गुनी-त्रयमिति विवेकः ।

तथोक्तं,—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनस्तु त्रिभो मतः।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया॥

इति शुद्धमासनिर्णयः।

---

## अथ मलमासनिर्णयः।

"चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्त्तितः।"

इति मलत्वं कालाधिक्यात्।

"मलं वदन्ति कालस्य मासं कालविदोऽधिकम्॥"

इति कालाधिक्यं च दर्शितम्।

सौरेणाब्दस्तु मानेन यदा भवति गार्गव।
सावनेन तदा माने दिनषट्कं न पूर्य्यते॥
दिनरात्रयश्च ते राम प्रोक्ताः संवत्सरेण षट्।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन।
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते॥
स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः॥

अयमर्थः, सौरः सम्वत्सरः षड्भिर्दिनैः सावनादतिरिच्यते। तथाच, कियदधिका पञ्चषष्टित्रिशती अहोरात्राणां सौरोऽब्दः, एकादशभिर्दिनैश्चान्द्रादतिरिच्यते, तथाच सावनात् षड्भिरहोरात्रैर्न्यूनः चतुःपञ्चाशत्रिशती चाहोरात्राणां चान्द्रोऽब्दः,

तथाच, चान्द्रसम्वत्सरद्वयात् सौरसंवत्सरद्वयं द्वाविंशत्या दिनै-रधिकं भवति, तत ऊर्द्ध्वं सौरं मासाष्टकं चान्द्रामासाष्टकात् सार्द्धैः सप्तभिर्दिनैरतिरिच्यते, तथाच मिलित्वा दिनार्द्धन्यूनो मासो भवति, सोऽयमधिमास इति अवशिष्टदिनार्द्धपूरणं च यथोक्त-कालादूर्द्ध्वं षोड़शभिर्दिनैः सम्पद्यते।

तथोक्तं,—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोड़भिस्तथा।
घटिकानां चतुष्के च प्रपतत्यधिमासकः॥ इति।

एतच्च स्फुटगणनामधिकृत्योक्तं, श्रौतस्मार्त्तयोर्मासि त्रिंशत्तमे भवेदित्युक्तमादरणीयं।

तथोक्तं,—

पञ्चमे पञ्चमे वाब्दे द्वौ मासावधिमासकौ। इति।
इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः॥ इति।

शुक्लप्रतिपदि दर्शेष्टिदेवते इन्द्राग्नी, कृष्णप्रतिपदि पौर्णमासे-ष्टिदेवते अग्नीषोमौ, अमावास्यायां पिण्डपितृयज्ञदेवते पितृ-सोमकौ, तथाच शुक्लप्रतिपदादिदर्शान्तो मासः संक्रान्तिरहितो-ऽधिमासः। स चाधिमासः पूर्व्वः, उत्तरस्तु शुद्धमासः।

षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः।
पूर्व्वार्द्धं तु परित्यज्य कर्त्तव्या चोत्तरे क्रिया॥ इति।

तथाचासावधिमास उत्तरदर्शान्तशुद्धमास एवान्तर्भवति, तेन मलमासजननमरणादिनिर्णयो मध्यान्तरे उत्तरशुद्धदर्शान्तमास एव विचारणीय: ।

---

## अथ क्षयमासनिर्णय: ।

असंक्रान्तिमासोऽधिमास: स्फुट: स्याद्,-
द्विसंक्रान्तिमास: क्षयाख्य: कदाचित् ।
क्षय: कार्त्तिकादित्रये नान्यदा स्या,-
त्तदावर्षमध्येऽधिमासद्वयं स्यात् ॥

असंक्रान्तमासोऽधिमास: पूर्व्वोक्त: । यदि द्विसंक्रान्तियुक्तो मासो भवति स क्षयमास:, स च कार्त्तिकादित्रय एव भवति, न माघादिषु नवसु मासेषु । एवंविधक्षयमासयुक्ते वर्षे क्षयमासात् पूर्व्वं त्रिषु मासेषु मध्ये क्वचिदधिमासो भवति । क्षयमासादूर्द्ध्वमपि मासत्रयमध्येऽपरोऽधिमास:, तदेवंविधमेकवर्षस्थं मलमासत्रयं, क्षयमासस्तु चिरेण कालेन भवति । पूर्व्वोदाहृतद्विसंक्रान्तिमासस्य मेषादिस्थे सवितरि यो मास: पूर्यते चान्द्र:, चैत्राद्य: स तु विज्ञेय: पूर्त्तिद्वित्वेऽधिमासोऽन्त्य इति मासद्वयत्वेन परिगणनम् ।

तिथ्यर्द्धे प्रथमे पूर्व्वो द्वितीयेऽर्द्धे तदुत्तर: ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगाविति ।

यदा तु मासचालनं तदा एकत्वेन परिगणनीयं, "न चलति

यदि मासो मासयुग्मं विचिन्त्य"मिति, अतएव एकमासत्वादंहसः पापस्य पतिरिति व्युत्पत्त्याऽसावहंस्पतिसंज्ञया व्यवह्रियते।

तदुक्तं,—

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा।

संसर्पांहंस्पती मासावधिमासश्च निन्दितः॥ इति।

तत्र क्षयमासात्प्राचीनो योऽसंक्रान्तः स संसर्पः, तस्य असंक्रान्तत्वेन कर्म्मानर्हतायां प्राप्तायां तदपवादेन सम्यक् सर्पतीति संसर्पः कर्म्मार्ह इत्यर्थः।

तदुक्तम्—

एकस्मिन्नेव वर्षे तु द्वौ मासावधिमासकौ।

प्राकृतस्तत्र पूर्व्वः स्यादुत्तरस्तु मलिम्लुचः॥ इति।

त्रयस्त्याज्या विवाहादौ संसर्पांहंस्पती उभौ।

शुद्धौ श्रौते तथा स्मार्त्ते, इति।

ननु यथा एकाधिमासोपेतस्य सम्वत्सरस्य त्रयोदशमासात्मकत्वं तथाऽधिमासद्वयोपेतस्य चतुर्दशमासात्मकत्वं स्यदिति चेत्, न।

"त्रयोदशं तु श्रुतिराह मास चतुर्दशः क्वापि न दृष्टपूर्व्व"-इति पूर्व्वस्य असंक्रान्तत्वेऽपि अधिमासत्वनिषेधात्।

घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि।

मकरे वाथ कुम्भे वा नाधिमासो विधीयते॥

तथा,—

चैत्रादर्वाक् नाधिमासः परतस्त्वधिको भवेदिति।

---

## अथ वर्ज्यावर्ज्यविवेकः ।

द्वादशाहसपिण्डान्तं कर्म्म ग्रहणजन्मनोः ।
सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म्म च ॥
रोगशान्तिरलभ्ये तु योगे श्राद्धव्रतानि च ।
प्रायश्चित्तनिमित्तस्य वशात् पूर्व्वं परत्र वा ॥
अब्दोदकुम्भमन्वादिमहालययुगादिषु ।
श्राद्धं दर्शेऽप्यहरहः श्राद्धमूनादिमासिकम् ॥
मलिम्लुचाब्दमासे तु मृतानां श्राद्धमाब्दिकम् ।
श्राद्धञ्च पूर्व्वदृष्टेषु तीर्थेष्वष्टयुगादिषु ॥
मन्वादिषु च यद्दानं दैनन्दिनञ्च यत्किल ।
गोभूतिलहिरण्यानां सन्ध्योपासनयोः क्रिया ॥
पर्व्वहोमश्चा(१)श्रयणं साग्नेरिष्टिश्च पर्व्वणोः ।
नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम् ॥
स्नानञ्च स्नानविधिना चाभक्ष्यापेयवर्ज्जनम् ।
तर्पणञ्च निमित्तस्य नित्यत्वादुभयत्र च ॥
अनित्यमनिमित्तञ्च दानञ्च महदादिकम् ।
अग्न्याधानाधरापूर्व्वतीर्थयात्रामरेचणम् ॥
देवारामतड़ागादिप्रतिष्ठामौञ्जीबन्धनम् ।
आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ॥

---

(१) आग्रयणं ।

राज्ञोऽभिषेकः प्रथमः चूड़ाकर्म्म व्रतानि च।
अन्नप्राशनमारम्भो गृहाणाञ्च प्रवेशनम्॥
स्नानं विवाहहोमातिपन्नदेवमहोत्सवम्।
व्रतारम्भसमाप्ती च काम्यं कर्म्म च पाप्मनः॥
प्रायश्चित्तञ्च सर्व्वस्य मलमासे विवर्जयेत्।
उपाकर्म्मोत्सर्जनञ्च पवित्रदमनार्पणम्॥
अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः।
ईशानस्य बलिर्विष्णोः शयनं परिवर्त्तनम्॥
दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानञ्च वज्रिणः।
पूर्व्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम्॥
मलमासे चैतानि वर्ज्याणि शुद्धमासे कर्त्तव्यानीति।

माधवाचार्य्योऽपि,—

काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत्।
आरब्धं मलमासात् प्राक् कृच्छ्रं मन्वादिकञ्च यत्॥
तत्समाप्यं सावनस्य मानस्यानतिलङ्घनात्।
आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः॥
प्रवृत्तमखिलं काम्यं तदानुष्ठेयमेव तु।
कारिर्य्यादि (१) तु यत्काम्यं तस्यारम्भसमापने॥
कार्य्ये कालविलम्बस्य प्रतीक्षाया असम्भवात्।
अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत्॥

---

(१) कारिर्य्येदि तु।

गत्यन्तरयुतं नित्यं सोमयागादि वर्जयेत् ।
अगतिग्रहणस्नानं जातेष्टिर्गतिसंयुता ॥
इयं नैमित्तिकं तस्य व्यवस्था नित्यवन्मता ।
शुद्धमासमृतानान्तु मले स्यात् प्रथमाब्दिकम् ।
मलमासमृतानान्तु मले स्यादाब्दिकान्तरम् ॥

इति मलमासनिर्णय: ।

---

## अथ पक्षनिर्णय: ।

स च शुक्लकृष्णभेदेन द्विविध: । आपूर्य्यमाणपक्ष: शुक्ल:, अपचीयमानपक्ष: कृष्ण: ।

तथाच, श्रुति:,—"ये चेमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसंविशन्ति धूमाद्रात्रिं रात्रेरपचीयमानपक्षमिति, ये चेमेऽरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमभिसंविशन्ति अर्चिषोऽह: अह्न आपूर्य्यमाणपक्षमिति ।"

स्मृतिरपि—

अग्निर्ज्योतिरह: शुक्ल: षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना: ॥
धूमो रात्रिस्तथा कृष्ण: षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥

तथा पूर्व्वपक्षं देवा अन्वसृज्यन्त, अपरपक्षमसुरा:, यं कामयेत वसीयान् स्यादिति, तं पूर्व्वपक्षे याजयेत्, यं कामयेत

पापीयान् स्यादिति तमपरपक्षे याजयेत् पापीयानेव भवति। तस्मात् पूर्व्वपक्षोऽपरपक्षात्कारुण्यतर इति। वसीयान् वसुसत्तमः, पापीयान् द्रव्यहीनः, कर्म्मणां शुभफलप्रापकत्वात् करुणामर्हतीति कारुण्यतरः।

स्मृतावपि उदगयन आपूर्य्यमाणपक्षे पुण्याह्ने यज्ञकालीऽनादेश इत्याह,—यज्ञीयदीक्षाप्रभृति शुक्लपक्षे पञ्चमीं सप्तमीं वा प्रसूत इति।

इति पक्षनिर्णयः।

---

## अथ तिथयो निरूप्यन्ते।

तनोति विस्तारयति वर्द्धमानामपचीयमानां वा चन्द्रकलामेकां यः कालविशेषः, सा तिथिः।

तन्वन्ते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः। इति।

तत्र कृष्णपक्षादौ चन्द्रस्य पञ्चदशानां कलानाम् एकैकां वह्न्यादयः प्रजापत्यन्ताः पञ्चदशदेवताः क्रमेण पिबन्ति। अमायां षोड़शकलावशिष्टश्चन्द्रमाः अपः ओषधीश्च प्रतिपद्यते।

तदुक्तं,—

कला षोड़शिका या तु अपः प्रविशते सदा।
अमायान्तु सदा सोम ओषधीः प्रतिपद्यते॥
तमोषधिगतं गावः पिबन्त्यम्बुगतं च यत्।
तत् क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः॥

हुतमग्निषु यज्ञेषु पुनराप्यायते शशी।
दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता। इति।

तिथिश्च द्विधा पूर्णा खण्डा च,

प्रतिपत्प्रभृतयः सर्व्वा उदयादोदयाद्रवेः।
सम्पूर्णा इति विख्याता हरिवासरवर्ज्जिताः॥

हरिवासर एकादशी।

आदित्योदयवेलायामारभ्य षष्टिनाड़िकाः।
या तिथिः सा तु शुद्धा स्यात्-सार्व्वतिथ्यो ह्ययं विधिः।

तत्र पूर्णायां नास्ति सन्देहः। खण्डतिथौ विधिनिषेध-व्यवस्था,—

निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके।
तिथीनां पूज्यता नाम कर्म्मानुष्ठानयोग्यता॥
निषेधस्तु निवृत्त्यात्मा तस्मात्कालमपेक्षते।

तस्मात् खण्डतिथिर्निर्णेतव्या भवति।

खर्व्वा दर्पा तथा हिंस्रा त्रिविधं तिथिलक्षणम्।
खर्व्वा समतिथिर्ज्ञेया दर्पा वृद्धियुता मता।
हिंस्रा क्षययुता ज्ञेया मुनिभिस्तिथिनिर्णये॥
त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात्॥
योदयादेति मध्याह्नमखण्डा सा तिथिः स्मृता।
खण्डान्यथा व्रतारम्भं समाप्तिं चात्र वर्ज्जयेत्॥

कर्म्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्॥
आदित्योदयवेलायां याऽल्पापि हि तिथिर्भवेत्।
सा पूर्णेत्येव मन्तव्या प्रभूता नोदयं विना॥
व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।
सा तिथिः सकला ज्ञेया श्राद्धादौ त्वस्तगामिनी॥

घटिका मुहूर्त्तम्।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्व्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥

पूर्व्वेद्युरुदयानन्तरं अमावास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति, परेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सा पूर्व्वां प्रतिपदं विध्यति।

तदुक्तम्,—

उदये पूर्व्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः।
सायं तूत्तरया तद्वन्न्यूनया तु न विध्यते॥

इति सामान्यवेधः।

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः।
सायाह्नस्त्रिमुहूर्त्तश्च सर्व्वकर्म्मवहिष्कृतः॥

एवं पञ्चधा विभागो दर्शितः। यद्यपि पञ्चदशमुहूर्त्ताः समरात्रंदिवे काले सम्भवन्ति नान्यदा "क्षीयन्ते तस्य हानौ च तन्मुहूर्त्ता-

स्तथैव च"। इत्यादिवचनाद्दिवाह्रानौ क्षीयन्ते दिवाह्रौ वर्द्धन्ते तत्राह्नः पञ्चधा भागं कृत्वा तेनैव विभागः कार्य्यः।

त्रेधा विभागोऽप्युक्तः,—

ऊर्द्ध्वं सूर्य्योदयात्प्रोक्तो मुहूर्त्तानाञ्च पञ्चकम्।
पूर्व्वाह्णः पञ्चकं प्रोक्तो मध्याह्नस्तु ततः परः॥
अपराह्णस्ततः प्रोक्तो मुहूर्त्तानाञ्च पञ्चकमिति।

तथा "पूर्व्वाह्णो वै देवानां मध्यं-दिनो मनुष्याणां अपराह्णः पितृणा"मिति। द्विधाविभागोऽपि पूर्व्वाह्णोऽपराह्ण इति, अह्नः पूर्व्वो भाग अपरो भाग इति, यथा पूर्व्वाह्णे दैविकं कर्म्मेति।

तत्र पञ्चधा विभागो मुख्यः, सर्व्वस्मृतिनिबद्धत्वात्।

तथाच माधवाचार्य्येणोक्तम्,—

तत्राह्नः पञ्चधा भागो मुख्यो द्वित्र्यादिभागतः। इति।

त्रिधाभागस्तु अमावास्याश्राद्धादौ ग्राह्यः।

वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः।

इति वचनात्। प्रत्याब्दिकादौ पञ्चधा विभागो ग्राह्यः।

---

## अथ युग्मवाक्यं निर्णीयते।

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतत्-व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति॥

युग्मं द्वितीया, अग्निस्तृतीया, युगं चतुर्थी, भूतं पञ्चमी, षट् षष्ठी, मुनिः सप्तमी, वसुरष्टमी, रन्ध्रं नवमी, रुद्र एकादशी, अत्र युग्माग्न्यादिसप्तयुग्मेषु पूर्व्वतिथिरुत्तरविद्धा ग्राह्या, उत्तरा तु पूर्व्वविद्धा ग्राह्येति।

तत्रादौ प्रतिपन्निर्णयः।

चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि।

शुक्लपक्षे समग्रं तु तदा सूर्य्योदये सति॥

तथा,—

या शुक्ला चैत्रमासस्य वत्सरादितिथिः स्मृता॥ इति,

संवत्सरादिः प्रतिपत्।

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।

पतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिरिति॥

सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा।

प्रतिपत् सम्मुखी कार्य्या या भवेदापराह्निकी॥ इति,

यत्तु, प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युतेति।

तत् कृष्णप्रतिपद्विषयम्।

तदुक्तम्,—

शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया।

उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्निकीति॥

तदभावेऽपि सायाह्नव्यापिनी परिगृह्यताम्।

अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते।

तिथिक्षियामतोऽर्वाक् चेत्तिथ्यन्ते पारणं भवेत्॥

तत्र उपवासव्रतादीनां प्रातरेव सङ्कल्पः कार्य्यः।

प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्।

गृहीत्वो(१)दुम्बरं पात्रं वारिपूर्णमुदङ्मुखः॥

उपवासञ्च गृह्णीयाद्-यद्वा वार्य्येव धारयेत्।

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः॥

उल्लेखनमकुर्व्वाणो न तस्य फलभाक् भवेत्।

इति वचनादुपवासव्रतादिषु मासपक्षतिथ्युल्लेखनपूर्व्वकं जलपूर्णताम्रपात्रेण ताम्रपात्रासम्भवे केवलजलेन वा सङ्कल्पम् कुर्य्यात्।

वस्युत्सवादिकं उपवासादिवत्पूर्व्वेद्युरेव।

श्रावणी दुर्गनवमी तथा दुर्व्वाष्टमी च या।

पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्॥ इति।

वस्युत्सवञ्च पूर्व्वेद्युरुपवासवदाचरेत्। इति।

एकभक्तं निर्णीयते,—

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।

एकभक्तमिति प्रोक्तमतस्तस्माद्दिवैव तत्॥

तथा,—दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।

एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु॥

दिनार्द्धसमयस्य उपरि सार्द्धमुहूर्त्तपरिमितः कालः।

पञ्चधा विभक्तमध्याह्नस्य अपरभाग एकभक्तस्य मुख्यः कालः, दिनार्द्धे अतीते समनन्तरभावित्वादस्तमयात्प्राचीनोऽवशिष्टो गौणः

---

(१) गृहीत्वौडुम्बरम्।

कालः, द्विवेत्यभ्यनुज्ञानात्। एवं व्यवस्थिते मुख्यकालव्यापिनी-तिथिर्ग्राह्या।

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः। इति

अत्र निर्णेतव्यो विषयः सोढ़ा भिद्यते, पूर्व्वेद्युरेव मध्याह्न-व्यापित्वं, परेद्युरेव तद्व्यापित्वं, उभयत्र तद्व्यापित्वं, उभयत्र साम्येन तदेकदेशव्यापित्वं, उभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति। तत्र प्रथमद्वितीययोर्मध्याह्नव्याप्तेर्निर्णायकत्वं, तृतीये पूर्व्वविद्धा ग्राह्या मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेरधिकत्वात्। चतुर्थे अनेनैव न्यायेन मुख्यकालव्याप्तेरभावेऽपि गौणकालव्याप्ति-लाभात् पूर्व्वविद्धैव, पञ्चमेऽप्ययमेवं न्यायो योज्यः। षष्ठे तु यदा पूर्व्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदानीं तदाधिक्यात् गौण-कालव्याप्तेश्च पूर्व्वैव ग्राह्या, यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदा गौणकालव्याप्त्यभावेऽपि मुख्यकालव्याप्त्याधिक्यानुसारेण सैव ग्राह्या।

एकभक्तं त्रिविधम्। स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपं चेति।

स्वतन्त्रं तूक्तं, अन्याङ्गैकभक्ते तु पूजाव्रतेषु सर्व्वत्र मध्याह्न-व्यापिनी तिथिरिति, अङ्गिनः पूजाविधेः मध्याह्ने विहितत्वेन मुख्यकालानुग्रहादङ्गस्य एकभक्तस्य मुख्यकालासम्भवेन गौणकाल-रूपेऽपराह्णे कर्त्तव्यत्वम्, केनचित् निमित्तेन स्वतन्त्रैकभक्ते मुख्यकालासम्भवेन गौणकालाभ्यनुज्ञानात्।

उपवासप्रतिनिधिरूपमेकभक्तम् उपवासतिथौ कार्य्यं, "तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा स्मृते"ति वचनात्, उपवासव्रतं

प्रकृतस्य रोगादिना तदशक्तौ गुर्व्वनुज्ञया तस्य एकभक्तस्य सम्भा-
वितत्वात् ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

इति शास्त्रात् ।

---

## अथ नक्तव्रतं निर्णीयते ।

तत्र नक्तस्य कालद्वयं दर्शितम् ।

मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥ इति ।

अस्य च कालभेदस्य अधिकारिभेदेन व्यवस्थामाह ।

नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् ।
यते र्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ इति ।

तथा, नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्य्यात्तत्सदिवाकरमिति ॥

दिवानक्तं तु तत्प्रोक्तमन्तिमे घटिकाद्वये ।
निशानक्तं तु तत्प्रोक्तं यामार्द्धे प्रथमे सदेति ॥

त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तं गते सति ।
नक्तं तत्र प्रकर्त्तव्यमिति शास्त्रविनिश्चयः ॥

तत्र नक्तं प्रदोषव्यापिन्यां तिथौ कार्य्यम् ।

प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ।
एकादशीं विना सर्व्वाः शुक्ले कृष्णे तथा स्मृताः ॥ इति ।

तथाच एकादश्यां यन्नक्तं तत्र उदयव्यापिनी तिथिर्ग्राह्या। तदुक्तं,—

प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।

उदयात्तु तथा पूज्या हरिनक्तव्रते तिथिः॥ इति।

तत्र पूर्व्वेद्युः प्रदोषव्याप्तौ पूर्व्वेद्युरेव, परेद्युस्तद्व्याप्तौ परेद्युरेव, उभयत्र प्रदोषव्याप्तौ परेद्युरेव।

यत्रैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः।

तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः॥ इति।

उभयत्र दिवारात्रावपि सा तिथिः विद्यते यत्र इत्यर्थः। उभयत्र प्रदोषव्याप्त्यभावेऽपि परैव।

अतथात्वे परत्र। "स्यादत्रार्व्वागस्ततो हि से"ति।

प्रदोषे तदभावेऽपि अस्तमयादर्व्वाक् यतः सा विद्यत इति ततः सा ग्राह्येत्यर्थः। दिवानक्तमभिप्रेत्येदमुक्तम्।

तदुक्तम्,—

प्रदोषव्यापिनी न स्याद्दिवानक्तं विधीयते। इति।

अत्र प्रदोषव्याप्तिर्मुख्यः कालः, सायंकालव्याप्तिरनुकल्प इति।

आत्मनो द्विगुणां छायामतिक्रामति भास्करे।

तन्नक्तं नक्तमित्याहुर्न नक्तं निशिभोजनम्॥ इति।

एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम्।

कुर्य्यान्नक्तव्रतं नक्तफलं भवति निश्चितम्॥ इति।

यत्तु सप्तमीभानुवारादौ सौरनक्तं विहितं, तत्र सायंकालव्याप्तिर्मुख्यः कालः।

तत्र रात्रिनक्तेषु साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्य्यं, सायंकालस्य नक्तस्य तत्तिथिव्याप्तत्वात्। अनेनैव न्यायेन सौरनक्तेषु सायंकालैकदेशव्याप्तौ पूर्व्वतिथिर्ग्राह्या, प्रदोषकालस्य गौणस्य तत्तिथिव्याप्तत्वात्।

---

## अथ अयाचितं निर्णीयते।

अत्र निषेधस्य प्राप्तिपूर्व्वकत्वात् याच्-आप्रसक्तेश्च परद्रव्यविषयत्वादयाचितशब्दः परद्रव्यमेव विषयीकरोति।

तच्च भोज्यद्रव्यं परकीयमयत्नोपनीतं चेति। अत्र अयाचितस्य नियमरूपत्वात् संकल्पोऽप्यस्मिन्नहोरात्रे याचितमन्नं न भोक्तव्यमित्येवंरूपः।

तदुक्तं यतिधर्मेषु,—

भिक्षाशनसमुद्योगात्प्राक्तेनापि निमन्त्रितम्।
अयाचितं हि तद्भोज्यं भोक्तव्यं मनुरब्रवीत्॥

अत्र अयाचितशब्दे प्रतिषेधपर्य्युदासावुभावपि सम्भवतः।

कल्पतरुव्याख्याने,—

अथापरं त्र्यहं किञ्चन याचेतेति प्रतिषेधपक्षाभिधानात्, पर्य्युदासपक्षोऽपि, "त्र्यहमथ्यादयाचित"मिति।

अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयादिति।

तत्र प्रतिषेधेऽनुष्ठेयाभावात्पर्य्युदासे च पराधीनत्वान्न कालो·

विशेषणीयः। असति कालविशेषविधौ कर्म्मकालव्याप्तिरत्र न गृह्यते, तेन, "अयाचिते तु तिथयः स्वीकार्य्या उपवासवदि"ति।

---

## अथ दानव्रतानि निर्णीयन्ते।

तत्र, पौर्व्वाह्णिकास्तु तिथयो दैवे कार्य्ये फलप्रदाः। इति।

त्रिमुहूर्त्तव्यापिनी ग्राह्या।

तथोक्तम्,—

सोदयत्रिमुहूर्त्तायां कुर्य्याद्दानं व्रतानि चेति।

यदि उभयत्र त्रिमुहूर्त्तव्यापिनी, नोभयत्र त्रिमुहूर्त्तव्यापिनी, उभयत्रापि साम्येन वैषम्येण वा त्रिमुहूर्त्तैकदेशव्यापिनी तदा पूर्व्वेद्युरेव। "सा तिथिः सकला ज्ञेया यस्यामस्तमितो रवि" रिति वचनादस्तमयव्याप्तेरधिकत्वात्, कर्म्मकालव्याप्तिबाहुल्याच्च। यदि वा परेद्युस्त्रिमुहूर्त्तव्यापिनी तदा क्षयगामित्वे त्रिमुहूर्त्तामप्युत्तरविद्धां परित्यज्य पूर्व्वेद्युरनुष्ठानं, वृद्धिगामित्वे साम्ये च परेद्युरेव खर्व्वदर्पवाक्यात्।

---

## अथ द्वितीयानिर्णयः।

सा च परविद्धा ग्राह्या युग्मवाक्यात्।

तथा,—

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी॥

त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः।

यत्तु, प्रतिपत्सद्वितीया स्याद्-द्वितीया प्रतिपद्युतेति। तदय-

महितीयाविषयं, तस्यां भगिनीभिर्भ्रातरो भोज्यन्ते, नैतद्व्रतादि-
विषयम्।

---

## अथ तृतीया।

रम्भाख्यां वर्जयित्वा तु तृतीया मुनिसत्तम।
अन्येषु शुभकार्य्येषु गणयुक्ता प्रशस्यते॥
द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः।
स याति नरकं घोरं कालसूत्रं भयङ्करम्॥
चतुर्थीसंयुता या च सा तृतीया फलप्रदा।
न वैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्द्धिनीति॥

---

## अथ चतुर्थी।

सा च युग्मवाक्यात् परविद्धा ग्राह्या।
एकादशी तथा षष्ठी अमावास्या चतुर्थिका।
उपोष्याः परसंयुक्ताः पराः पूर्व्वेण संयुताः॥
अमा वै सोमवारेण रविवारेण सप्तमी।
चतुर्थी भौमवारेण अक्षयादपि चाक्षया॥

---

## अथ पञ्चमी।

स च युग्मवाक्याच्चतुर्थीसंयुता कार्य्या॥

तथा,—

चतुर्थीसंयुता कार्य्या पञ्चमी परया न तु।
दैवे कर्म्मणि पित्र्ये च शुक्लपक्षे तथा सिते॥

यत्तु "पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद" इति वचनं, तत् स्कन्दोपवासविषयम्।

---

## अथ षष्ठी।

सा च युग्मादिशास्त्रेण सप्तमीसंयुता कार्य्या।
एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी॥
अमावास्या तृतीया च उपोष्याः स्युः परान्विताः।

यदा तु तिथिक्षयवशादुत्तरविद्धा न लभ्यते तदा पञ्चमी-विद्धा ग्राह्या।

तथोक्तं,—

एकादशी तृतीया च षष्ठी चैव त्रयोदशी।
पूर्व्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनीति॥

---

## अथ सप्तमी।

सा च पूर्व्वविद्धैव षण्मुन्योरित्यभिधानात्।
षष्ठी तु सप्तमी यत्र अन्योन्यं तु समाश्रिते।
पूर्व्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तिथिरिति॥

तथा,—

षष्ठ्येकादश्यमावास्या पूर्व्वविद्धाष्टमी तथा।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम्॥

यदा पूर्व्वेद्युरस्तमयपर्य्यन्ता षष्ठी परेद्युस्तिथिक्षयवशादस्तमयादर्वागष्टमी त्रिमुहूर्त्ता, तदा पूर्व्वविद्धाया अलाभादुत्तरविद्धायामपि कर्त्तव्यं, शेषिलोपस्य अन्याय्यत्वादुत्तरविद्धा गौणकालत्वेन स्वीकार्य्या ।

---

## अथ अष्टमी ।

तत्र शुक्लाष्टमी परविद्धा ग्राह्या, वसुरन्ध्रयोरित्यभिधानात्, कृष्णाष्टमी तु पूर्व्वविद्धा ग्राह्या ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ॥
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्व्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति ॥
उपवासादिकार्य्येषु एष धर्म्मः सनातनः ॥ इति ।

---

## अथ नवमी ।

सा च पूर्व्वविद्धा ग्राह्या, वसुरन्ध्रयोरित्यभिधानात् ।

अष्टमी नवमीविद्धा नवमी चाष्टमीयुता ।
अर्द्धमाहेश्वरीप्राया उमामाहेश्वरी तिथिः ॥ इति ।
न कुर्य्यान्नवमी तात दशम्या तु कदाचनेति ।

---

## अथ दशमी ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति वचनात् कृष्णा दशमी पूर्व्वविद्धा, शुक्ला परविद्धा ग्राह्या।

---

## अथ एकादशी ।

एकादश्युपवासो नित्यः काम्यश्च । तत्र नित्यत्वसाधकान्युच्यन्ते,

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपीति ।

अत्र नित्यशब्दः,—

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ।

अत्र सदाशब्दः ।

उपोष्यैकादशी राजन् यावदायुःप्रवृत्तिभिः ।

अत्र यावदायुःशब्दः ।

अतिक्रमनिषेधश्च,—

एकादशीमुपवसेन्न कदाचिदतिक्रमेत् ॥

अकरणे दोषश्च,—

न करोति हि यो मूढ़ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसावृतम् ॥ इति

एकादश्यां मुनिश्रेष्ठ यो भुङ्क्ते नष्टचेतनः ।
प्रतिमासश्च निरयं याति नास्त्यत्र संशयः ॥

निष्कृतिर्मद्यपस्योक्ता धर्म्मशास्त्रे मनीषिभिः ।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ॥
मद्यपानान्मुनिश्रेष्ठ पातैव नरकं व्रजेत् ।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति ॥
परमापदमापन्ने हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्यजेद्‌-द्वादशीव्रतम् ।
यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।

अकरण इव असमापनेऽपि दोष उक्तः,—

समादाय विधानेन द्वादशीव्रतमुत्तमम् ।
तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥
परिगृह्य विधानेन एकादश्यादिकं नरः ।
न समापयते तस्य गतिः पापीयसी भवेत् ॥

फलाश्रवणाच्च,—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
पक्षे पक्षे तु कर्त्तव्यमेकादश्यामुपोषणम् ॥ इति

अत्र दीपिका, एतानि नित्यत्वादीन्यष्टौ नित्यत्वसाधकानि । काम्यत्वञ्च फलश्रवणादवगम्यते,—

यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

ननु एकस्य कर्म्मणो नित्यत्वकाम्यत्वाङ्गीकारे नित्यानित्यसंयोगविरोधः स्यात्, मैवं प्रमाणद्वयेन खादिरादिवद्‌द्वैरूप्योपपत्तेः ।

एकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायात्, तथाच काम्याग्निहोत्रन्यायेन द्वैरूप्ये न प्रयोगभेदः, काम्यमनुतिष्ठतो नित्यस्य परिहर्त्तुमशक्यत्वात्कालैक्यात्कर्त्रैक्याच्च न द्वौ प्रयोगौ।

तथाच,—तन्त्रेणानुष्ठाने काम्यफलमेव; नतु पापक्षयरूपं फलम्। परन्तु प्रत्यवायानुत्पत्तिः।

स्वकाले यदकुर्व्वंस्तु करोत्यन्यदचेतनः।

प्रत्यवायोऽस्य तेनैव नाभावे न स जन्यते॥ इति।

उपात्तदुरितक्षय एव फलम्। तत्र साङ्गाद्वैदिककर्म्मणः फलावश्यम्भावनियमात्सर्व्वाङ्गोपेतादेव प्रधानात्काम्यफलम्, न नित्यवदङ्गहीनादपि। नित्येषु हि यथाशक्त्युपबन्धः। तथाच, एकस्मात्प्रयोगादेकमेव फलम्। न युगपदनेकमिति। सर्व्वेभ्यः कामेन च नित्यानामकरणे प्रत्यवायश्रवणात्प्रत्यवायपरिहार एव फलम्। प्रत्यवायपरिहारस्य नित्यस्य अत्यन्ताभावरूपतया भाव्यत्वायोगात्। न च विश्वजिन्न्यायेन स्वर्गः फलम्। विरक्तानां स्वर्गेऽपि इच्छानिवृत्तेः। ततः सर्व्वस्य इच्छागोचरत्वात्। तेभ्यो-दर्शपौर्णमासावित्यत्र एकस्मात्प्रयोगादेकफलं न युगपदनेकमिति योगसिद्ध्यधिकरणे सिद्धान्तितम्।

विविदिषाधिकरणन्यायेन सकृदेवानुतिष्ठतः प्रयोगद्वयसिद्धेः, विविदिषाधिकरणे हि ब्रह्मविद्यासिद्धये विहितेन यज्ञादिकर्म्मणा गृहस्थाश्रमविहितयज्ञादिसिद्धिरिति सकृत्प्रयोगः प्रतिपादितः।

तदुक्तम्,—

काम्येन नित्यसिद्धिः स्यात्प्रयोगो नोभयात्मकः। इति।

तेन एकादश्युपवासस्य नित्यत्वकाम्यत्वलक्षणद्वैरूप्यविरोधा-भावाद्द्वैरूप्यं सिद्धम् ।

---

## अथ वेधो निरूप्यते ।

अरुणोदयवेधः सूर्य्योदयवेधश्चेति ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ॥
दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवो पोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥
वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः ।

तथा,—

परमापदमापन्ने हर्षे वा समु पस्थिते ॥
नैकादशीं त्यजेद्यस्तु तस्य दीक्षाऽत्र वैष्णवी ।
समात्मा सर्व्वजीवेषु निजाचारादविप्लुतः ।
विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते ॥

न चलति निजवर्णधर्म्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न हन्ति कंचिदुच्चैः शितमनसन्तमवेहि विष्णुभक्तं ॥इति

यथोक्तगुणसम्पन्नो वैष्णवदीक्षां प्राप्तो यः स वैष्णवः तं प्रति तिथिरेवं निर्णेतव्या ।

उदयात्प्राक्चतस्रस्तु नाडिका अरुणोदयः ।

इति अरुणोदयवेधो वैष्णवविषयः ।

---

## अथ श्रौतस्मार्त्तपर्य्यवसितानां पञ्चरात्रादिदीक्षा-रहितानां एकादशी निर्णीयते।

तत्र अरुणोदयवेधस्य वैष्णवविषयत्वे व्यवस्थिते सूर्य्योदये वेधः। तदुक्तम्,—

अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः।
सर्व्वेऽप्यवेधा विज्ञेया वेधः सूर्य्योदये मतः॥
दशम्येकादशी यत्र गान्धार्य्या समुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत्॥
दशमीशेषसंयुक्तां यः करोति विमूढधीः।
एकादशीफलं तस्य नश्येद्द्वादशवार्षिकम्।
एकादशी दशाविद्धा परतोऽपि न वर्द्धते॥
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः।
एकादशी द्वादशी च द्वावेतौ मम वासरौ॥
यदा पूर्व्वा तु विद्धा स्यात्तदोपोष्या परा तिथिः।
कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदा॥
तदाप्येकादशीं त्यक्त्वा द्वादश्यां समुपोषयेत्।

एतत् पुत्रवद्गृहस्थविषयम्।

तदुक्तम्,—

एकादशी दिनक्षय उपवासं करोति यः।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथेति॥

तथाच एकादशीदिनक्षये पुत्रवद्-गृहस्थव्यतिरिक्तानामेव विशेषोपवासः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृहीति ॥
तथाच, कृष्णैकादश्यां गृहिभिर्नोपोष्यम् ।

तथोक्तम्,—

आदित्येऽहनि संक्रान्त्यामशितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृहीति ॥

अत्र संक्रान्त्यादिषूपवासनिषेधः संक्रान्त्यादिनिमित्तः । तेन शुक्लैकादश्यां संक्रान्तिरविवासरादौ न उपवासनिषेधः ।

तदुक्तम्,—

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो दोषो यतो नित्यमुपोषणमिति ॥

संक्रान्त्युपवासस्य काम्यत्वात्तन्निषेधेऽपि नित्यैकादश्युपवासः सिध्यति ।

शयिनी बोधिनी मध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥
विधवाया वनस्थस्य यतेश्चैकादशीद्वये ।
उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः ॥

तथाच, सर्व्वेषां पक्षद्वये भोजनवर्ज्जनं, गृहस्थेतरेषां पक्षद्वयेऽपि व्रतम् । गृहस्थानां शुक्लास्वेव, शयिनीबोधिनीमध्यकृष्णासु च अपुत्रवद्गृहस्थव्रतं, पुत्रवतस्तु तास्वपि किञ्चिद्भक्षणपूर्व्वकं व्रतमिति । अथवा कामनारूपे निमित्ते कार्य्यम् ।

तथोक्तम्,—

एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः।

पुत्रानायुः समृद्धिञ्च सायुज्यञ्च स गच्छति॥

---

## अथाधिकारी निरूप्यते।

अष्टाब्दादधिको मर्त्त्यो ह्यपूर्णाशीतिवत्सरः।

भुंक्ते यो मानवो मोहादेकादश्यां स पापकृत्॥

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

ब्रह्मचारी च नारी च शुक्लामेव सदा गृही॥

नारी विधवा, तस्या एव यतिधर्म्मत्वात्।

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्।

आयुषं हरते पत्युर्नरकञ्चैव गच्छति॥

तथा,—

नास्ति स्त्रीणां पृथक्यज्ञो न व्रतं नाप्युपोषणम्। इति,

नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा।

निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकमिति॥

तथाच, पत्युरनुमत्या व्रतादिष्वधिकारिणी।

एकादश्याधिक्ये,—

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

द्वादशी च त्रयोदश्यां नास्ति चेत्तत्कथं भवेत्।

उत्तरां तु यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृहीति॥

"निष्कामस्तूत्तरां वसेदि"ति विधवाया अपि द्वितीयाया-मुपवासः ।

अन्यच्च,—

एकादशी यदा पूर्णा परतः पुनरेव सा ।
पूर्व्वं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ॥
सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
यत्तु,—सर्व्वैरेवोत्तरा पोष्या परतो द्वादशी यदीति ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्र्यहस्पृक् तदहोरात्रं नोपोष्यं तत्सुतार्थिभिः ॥
उपवासनिषेधेऽपि भक्ष्यं किञ्चित् प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

इति वचनात्किञ्चिद्भक्षणं कर्त्तव्यं, दशमीविद्धैकादश्यां तु न तथा, द्वादश्यामुपवासविधानात् ।

अशक्तावुपवासस्य भक्ष्यं किञ्चित् प्रकल्पयेत् ।
उपवासेऽसमर्थानामशीतेरूर्द्ध्वजीविनाम् ॥
एकभक्तादिकं कार्य्यमाह बौधायनो मुनिः ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन दानेन न निर्द्वादशिको भवेत् ।

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु लेह्यम् ।
यत् पञ्चगव्यं यदि वापि वायुः
प्रशस्तमत्रोत्तरमुत्तरं स्यात् ।

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते।
कारयेद्धर्म्मपत्नीं वा पुत्रं वा विनयान्वितम्॥
भार्य्या पत्युर्व्रतं कुर्य्याद्भार्य्यायाश्च पतिर्व्रतम्।
पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा॥
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्।
भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः॥
पितृमातृपतिभ्रातृ-स्वसृगुर्व्वादिभूभुजाम्।
अद्दिष्टार्थमुपोषित्वा-स्वयं च फलभाग्भवेत्॥

असामर्थ्ये उपक्रमादूर्द्धं प्रतिनिधिनाऽपि तत्कर्म्म कारयेत्।

सायमाद्यन्तयोरह्नोः सायं प्रातर्भुजिक्रियाम्।
उपवासफलप्रेप्सुर्जह्याद्भुक्तिचतुष्टयम्॥
उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्॥
असकृज्जलपानञ्च दिवा स्वप्नञ्च मैथुनम्।
ताम्बूलचर्वणं मांसं वर्ज्जयेद्व्रतवासरे॥
उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥
स्त्रीणां सम्प्रेक्षणात् सङ्गात्ताभिः संकथनादपि।
निस्यन्दते ब्रह्मचर्य्यं न दारेष्वृतुसङ्गमात्॥
गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्।
व्रतस्थो वर्ज्जयेत्-सर्व्वं यच्चान्यच्च निराकृतमिति॥

व्रतस्थस्य पूजाजागरादिकमावश्यकम्।

एवं सम्पूज्य विधिवद्रात्रौ कृत्वा तु जागरम् ।
याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः ॥

"पारणान्तं व्रतं ज्ञेय"मिति वचनाद्द्वादश्यां पारणं कुर्य्यात् ।

कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि ।
आमध्याह्नात् क्रियाः सर्व्वाः कर्त्तव्याः शम्भुशासनात् ॥
यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
उषःकाले द्वयं कार्य्यं प्रातर्माध्याह्निकं तदा ॥

सन्ध्यादिकं असामर्थ्ये,—

सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
अद्भिस्तु पारयित्वा तु नैत्यकान्ते भुजिर्भवेत् ॥
सङ्कटे समनुप्राप्ते द्वादश्यां पारयेत् कथम् ।
अद्भिस्तु पारयित्वा तु नैत्यकान्ते भुजिर्भवेत् ॥

एकादशीमहिमा,—

अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोड़शीम् ॥

---

## अथ द्वादशी ।

सा च युग्मादिशास्त्रेण पूर्व्वविद्धा ग्राह्या ।

तथोक्तम्,—

द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ।
सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥ इति

---

## अथ त्रयोदशी।

तत्र कृष्णत्रयोदशी परविद्धा ग्राह्या।

षष्ठ्यष्टमी अमावास्या कृष्णा चैव त्रयोदशी॥

एताः परयुताः कार्य्याः पराः पूर्व्वेण संयुताः।

यदा परविद्धा न लभ्यते तदा पूर्व्वविद्धा ग्राह्या।

एकादशी तृतीया च षष्ठी चैव त्रयोदशी।

पूर्व्वविद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनि॥

शुक्लपक्षे पूर्व्वविद्धा ग्राह्या।

त्रयोदशी प्रकर्त्तव्या द्वादशीसहिता मुने। इति,

अत्र कृष्णत्रयोदश्याः परविद्धत्ववचनात्परिशेषाच्छुक्लत्रयोदशी पूर्व्वविद्धा ग्राह्या।

---

## अथ चतुर्दशी।

तत्र—

शुक्ला चतुर्द्दशी ग्राह्या परविद्धा सदा व्रते। इति,

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी।

पूर्व्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति॥

कृष्णचतुर्दशी पूर्व्वविद्धा कार्य्या।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।

पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित्॥ इति

---

## अथ पञ्चदशी।

सा च पौर्णमासी अमावास्या च, तत्रोभयत्रापि चतुर्दशी-विद्धा ग्राह्या।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च ता उपोष्याः परान्विताः॥ इति

युग्मशास्त्रे,—

पूर्व्वविद्धा च कर्त्तव्या सप्तमी व्रतिभिर्नरैः।
पौर्णमासी महीपाल पुराणे निश्चयं गतेति॥

एवं परस्परविरोधे व्यवस्था उक्ता।

भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा।
वर्ज्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम्॥

तच्च पौर्णमास्याममावास्यायाञ्च विहितम्। यः परो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी। यः परः सन्निकर्षः सा अमावास्या।

राका,चानुमतिश्चैव पौर्णमासी द्विधा मता।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव ते॥ इति।

तथाच श्रुतिः,—

या पूर्व्वा पौर्णमासी सानुमतिः, चोत्तरा सा राका, या पूर्व्वा अमावास्या सा सिनीवाली, चोत्तरा सा कुहूरिति।

राका सम्पूर्णचन्द्रा स्यात्-कला सानुमतिः स्मृता।
पौर्णमासी दिवादृष्टे शशिन्यनुमतिः स्मृता।
रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता॥

दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।
एतामेव कुहूमाहुर्नष्टचन्द्रां महर्षय: ॥ इति ।

---

## अथ यागकालो निरूप्यते ।

पर्व्वणो यश्चतुर्थांश आद्या: प्रतिपदस्त्रय: ।
यागकाल: स विज्ञेय: प्रातर्युक्तो मनीषिभि: ॥

अत्र प्रातरिति विशेषणात् सूर्य्योदयोपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति ।

प्रतिपच्चतुर्थांशे तु निषेध: स्मर्य्यते ।
न यष्टव्यं चतुर्थेऽंशे यागै: प्रतिपद: क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥ इति ।

यदि मध्याह्नादूर्द्ध्वं सन्धि:, तस्मिन् सन्धिदिनेऽन्वाधाय परेद्युरिति प्रतिपच्चतुर्थांशोऽपि यागकाल: ।

तथोक्तम्,—

सन्धिर्यद्यपराह्ने स्याद्याग: प्रात: परेऽहनि ।
कुर्व्वाण: प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

सन्धिकालमाह,—

सन्धिश्चेत् सङ्गवादूर्द्ध्वमर्व्वागावर्त्तनाद्रवे: ।
सा पौर्णमासी विज्ञेया सद्य:कालविधौ तिथि: ॥ इति ।
वृद्धि: प्रतिपदो यास्ति तदर्द्धं पर्व्वणि क्षिपेत् ।
क्षयस्यार्द्धं तथा छित्वा सन्धिर्निर्णीयतां बुधै: ॥

पर्व्वप्रतिपदो: सन्धिर्मध्याह्ने वा तत: पुरा ।
अन्वाधानं पूर्व्वदिने याग: सन्धिदिने भवेत् ॥
ऊर्द्ध्वं मध्याह्नत: सन्धावन्वाधानञ्च तद्दिने ।
इष्टिं परदिने कुर्य्यादन्यो वाजसनेयिन: ॥
यस्तु वाजसनेयी स्यात्तस्य सन्धिदिनात्पुरा ।
नन्वप्यन्वाहितिः किन्तु सदा सन्धिदिने हि सा ॥

एवं सन्धिनिर्णये पौर्णमास्यां "पौर्णमास्यया यजेते"ति सत्यपि वचने पूर्व्वेद्युरग्निं गृह्णाति परेद्युर्देवान् यजतीति श्रुतेः, प्रयोगैकदेश: पौर्णमास्यां कार्य्यः। यद्यपि पौर्णमास्यां सद्यःकालवचनात् प्रतिपद्यारम्भः प्राप्नोति न पौर्णमास्यां, तथापि एषा वै सम्वत्सरस्य प्रथमा रात्रिर्योत्तरा पौर्णमासी एषोत्तरा, या पूर्व्वेति प्रतिपद्यपि पौर्णमासीपदप्रयोगात्तदापि न श्रुतिविरोधः, अमावास्ये तु प्रतिपदि दर्शपदाश्रुतावपि अमावास्यायां "अमावास्यया यजेते"ति श्रुतिविरोधः प्राप्नोति ।

तथापि पूर्व्वेद्युः पितृभ्यो निष्क्रीय परेद्युर्देवेभ्यो ददातीति श्रुतेश्चन्द्रक्षयोत्तरदिनमेव अमावास्याशब्देनोच्यते ।

अतएव जीवत्पितृकस्य पितृयज्ञाभावादमावास्यायामेवेष्टिरित्यभिप्रेत्य सम्प्रदायग्रन्थे जीवत्पितृकस्य चतुर्दश्यामेवोपवास इत्यभिहितम् ।

---

## अथ विकृतेष्टिकालः ।

आवर्त्तनात्प्राक् यदि पर्व्वसन्धिः कृत्वा च तस्मिन् प्रकृतिं विकृत्याः ।
तत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परेद्युः ।

आवर्त्तने ततः पुरा वा पर्व्वसन्धौ तस्मिन् सन्धिदिने प्रकृतियागं कृत्वा पश्चाद्विकृतियागः कर्त्तव्यः । यद्यावर्त्तनात्परतः सन्धिः तदा केवलविकृतियागः सन्धिदिने कार्य्यः । प्रकृतियागस्तु परेद्युरनुष्ठेयः इष्टीनां सर्व्वासां दर्शपौर्णमासौ प्रकृतिः । तत्र प्रकृतिवद्विकृतिः कर्त्तव्येति न्यायेन विकृतीनामपि सन्धिदिनात्परेद्युः कदाचिदनुष्ठानं प्राप्नोति, तदनेन वचनेन निवार्य्यते । इष्टिविकृतिन्यायः पशुविकृतिसोमविकृत्योरपि द्रष्टव्यः । पशूनां सर्व्वेषामग्नीषोमीयः प्रकृतिः । "वायव्यं श्वेतमालभेत भूतिकाम"-इत्याद्याः काम्यपशवो विकृतयः, सोमयागानां सर्व्वेषामग्निष्टोमः प्रकृतिः ।

त्रिविधानामिष्टिपशुसोमविकृतीनां पर्व्वैव कालः ।

तथाच श्रूयते,—"इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति" ।

अत्रापि पूर्व्ववत्प्रतिपदि कदाचिदनुष्ठानप्रसक्तौ तद्व्यावृत्तये पुनः कालो विधीयते, तस्माद्विकृतीनां पर्व्वैव काल इति स्थितम् ।

पश्चादिचरुकालः,—

पश्चादावेव कुर्व्वीत सदा पश्चादिकञ्चरुम् ।
पूर्व्वाह्ण एव कुर्व्वन्ति विद्वांसोऽप्यन्ये मनीषिणः ॥

तथाच इष्टिदिने द्वितीयाविद्धप्रतिपद्येव वा प्रातः कुर्व्वन्तीत्यर्थः, सम्वत्सरादिः प्रतिपत् । या शुक्ला प्रतिपच्चैत्रमासस्य वत्सरस्य सा, इति ।

चैत्रशुक्लादिका मासा इत्यभिप्रायेण प्रथममशोकाष्टमी निर्णीयते ।

चैत्रे मासि शिताष्टम्यां ये पिबन्ति पुनर्वसौ ।
अशोकस्याष्टकलिका न ते शोकमवाप्नुयुः ॥

अत्र गुणलोपे तु मुख्यस्येति न्यायेन तिथेः प्राधान्येन नक्षत्रयोगाभावे तिथिमात्रे कार्य्यं, तिथिद्वैधे अष्टमी परविद्धा ग्राह्या, वसुरन्ध्रयोरित्यभिधानात् ।

मन्त्रस्तु,—

त्वामशोक ! हराभीष्ट मधुमाससमुद्भव ! ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥
पुनर्व्वसुबुधोपेतां चैत्रेमासि शिताष्टमीम् ।
स्रोतःसु विधिवत्स्नात्वा वाजपेयफलं लभेत् ।
अशोकैरर्चयेदुग्रमशोककलिकां पिबेत् ॥

रामनवमी,—

प्राप्ते श्रीरामनवमीदिने मर्त्त्यो विमूढ़धीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
कुर्य्याद्रामनवम्यां तु उपोषणमतन्द्रितः ।
मातृगर्भमवाप्नोति नैव रामो भवेत् स्वयम् ॥

तस्मात् सर्व्वात्मना सर्व्वैः कृत्वैव नवमीव्रतम्।
मुच्यते पातकैः सर्व्वैः यान्ति ब्रह्मसनातनम्॥

तथाच अकरणे प्रत्यवायश्रवणान्नित्यं, फलश्रवणात् काम्यं, तेन संयोगपृथक्-त्वेनोभयार्थम्।

चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः।
पुनर्वस्वृर्क्षसंयुक्ता सा तिथिः सर्व्वकामदा॥
पुनर्वस्वृर्क्षसंयोगः स्वल्पोऽपि यदि लभ्यते।
चैत्रशुक्लनवम्यां च सा तिथिः सर्व्वकामदा॥
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका।
तस्मिन् महापुण्यतमे राममुद्दिश्य भक्तितः॥
यत्किञ्चित् कुरुते कर्म्म तत्तदक्षयकारकम्।
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम्॥
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः।
चैत्रशुक्लनवम्यां तु रामस्य पूजनं भवेत्॥
तत्र मध्याह्नवेलायां सञ्जातो हि जगत्पतिः।
चैत्रशुक्ला तु नवमी पुनर्व्वसुयुता यदि॥
सैव मध्याह्न योगेन महापुण्यतमा भवेत्।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः॥
उपोषणं नवम्यां वै दशम्यामेव पारणम्।

एतद्वैष्णवपरम्।

श्रीरामजन्मनवमी सम्पूर्णा फलदा सदा।
विद्धा चेत् परविद्धैव कर्त्तव्या तु विशेषतः॥

द्वयोर्मध्याह्नयोगे तु नोपोष्या पूर्व्वसंयुता ।
परविद्धैव कर्त्तव्या मध्याह्नव्यापिनी यदेति ॥

---

## अथ कामदेवत्रयोदशी ।

चैत्रशुक्लत्रयोदश्यां मदनं चन्दनात्मकम् ।
कृत्वा सम्पूज्य विधिवद्वीजयेद्व्यजनेन तु ॥
तत्र सम्पूजितः कामः पुत्रपौत्रसमृद्धिदः ।
तथा कामत्रयोदश्यां पूजनीयो यथाविधि ॥
रतिप्रीतिसमायुक्तो ह्यशोकैरपि भूषितः ।
ततः प्रातः समुत्थाय स्नात्वा कलशवारिणा ।
परं सौभाग्यमाप्नोति कामांश्चाप्नोति पुष्कलान् ॥
तिथिद्वैधे पूर्व्वविद्धा ग्राह्या ।
अनङ्गत्रयोदशी रम्भा उपोष्या पूर्व्वसंयुतेति ।

अन्यच्च,—
मार्गशीर्षे मले पक्षे इत्युपक्रम्य
ख्याता ह्येषा तथानङ्गत्रयोदशीति ।

दमनकचतुर्दशी,—
मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी ।
प्रोक्ता दमनभञ्जीति सिद्धिदा तु महोत्सवा ॥
पूजयिष्यन्ति ये मर्त्यास्तदङ्गभवपल्लवैः ।
ते यान्ति परमं स्थानं दमनस्य प्रभावतः ॥

एषा पूर्व्वविद्धा ग्राह्या ।

सर्व्वा चतुर्द्दशी ग्राह्या युक्ता पूर्णेन्दुना सह ।
अपूर्व्वा पूर्णिमा युक्ता मधौ शुक्लचतुर्द्दशी ॥

अक्षयतृतीया,—

वैशाखे मासि राजेन्द्र तृतीया चन्दनस्य च ।
कलधौतं तथा धान्यं घृतञ्चापि विशेषतः ॥
तस्यां दत्तं त्वक्षयं स्यात्तेनेयमक्षया स्मृता ।
तृतीया चन्दनस्येति वचनाच्चन्दनदानं प्रशस्तम् ।
दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः । इति ।

कञ्जजो ब्रह्मा ।

वैशाखे मासि राजेन्द्र शुक्लपक्षे च या तिथिः ।
तृतीया रोहिणीयुक्ता अक्षया सा तिथिः स्मृता ॥

तथा,—

अक्षया सा तिथिर्ज्ञेया कृत्तिकाभिर्युता यदि ।
भविष्यति महाभागे विशेषेण फलप्रदा ॥
ये पश्यन्ति तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे ते यान्त्यच्युतमन्दिरम् ॥
वैशाखे शुक्लपक्षे तु तृतीयायां जनार्द्दनः ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ॥

यवान् दद्याद्द्विजातिभ्य: प्रयत: प्राशयेद्द्विजान् ।
पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमालयम् ॥
भगीरथञ्च नृपतिं सगराणां सुखावहम् ।
स्नानं दानं तप: श्राद्धं जपहोमादिकञ्च यत् ॥
श्रद्धया क्रियते यत्तु तदानन्त्याय कल्पते ।
सिन्धोस्तीरे विशेषेण सर्व्वमक्षयमुच्यते ॥

तिथिद्वैधे तृतीया परयुता कार्य्या ।

नरसिंहचतुर्दशी,—

शुक्ले पक्षे चतुर्दश्यां मासि माधवसंज्ञके ।
प्रादुर्भूतो नृपञ्चास्यस्तस्मात्तां समुपोषयेत् ॥
अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी ।
पूर्णायुक्तां तु तां कुर्य्यान्नरसिंहस्य तुष्टये ॥
य: करोति नरो मोहात् कामविद्धां चतुर्दशीम् ।
धनापत्यैर्वियुज्येत तस्मात्तां परिवर्ज्जयेत् ॥
चतुर्दशी न वर्त्तेत सायंकाले दिनद्वये ।
परैव वर्त्तते वापि कर्त्तव्या सा तदैव तु ॥
स्पृशेत् परदिने चेत्स्यात् सायंकालं चतुर्दशी ।
कर्त्तव्या त्वन्यथा पूर्व्वा नरसिंहप्रिया तिथि: ॥

तथाच सायंकाले उभयत्र चतुर्दशीसद्भावे परविद्धा ग्राह्या । पूर्व्वदिने चेत् पूर्व्वविद्धैव, परदिने चेत् परविद्धा, उभयत्रभावे परविद्धैव ।

सावित्रीव्रतं,—

कथयामि कुलस्त्रीणां महिम्नो वर्द्धनं परम् ।
यथा चीर्णं व्रतं पूर्व्वं सावित्र्या राजकन्यया ॥ इति ।
भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्ज्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

इति वचनाच्चतुर्दशीविद्धा कार्य्या । यदा चतुर्दशी अष्टादश-नाड़िका भवति तदा त्याज्या । "भुताष्टादशनाड़ीभिर्दूषयत्युत्तरां तिथि"मिति वचनात् ।

आरण्यकषष्ठी,—

ज्यैष्ठे मासि शिते पक्षे षष्ठ्यामारण्यकव्रतम् ।
या विन्ध्यवासिनीं देवीं पूजयेयुर्वने गताः ।
कन्दमूलफलाहारा लभन्ते सत्पतिं तु ताः ॥

तिथिद्वैधे पूर्व्वविद्धा ग्राह्या ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥

"या विन्ध्यवासिनीं स्कन्द" इति पठित्वा एषा स्कन्दषष्ठीति वदन्ति । वस्तुतस्तु चैत्रकृष्णषष्ठी स्कन्दषष्ठी ।

षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपचारिका ।
इहैव सुखमाप्नोति अन्ते विष्णुपुरं व्रजेत् ॥ इति ।

तेनारण्यकषष्ठी त्रिमुहूर्त्तव्यापिनी उत्तरविद्धा ग्राह्या ।

दशहरादशमी,—

ज्यैष्ठे शुक्लस्य दशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः ॥
यां काञ्चित् सरितं प्राप्य दद्याद्दर्भैस्तिलोदकम् ।
ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥
हरते दश पापानि तस्माद्दशहरा स्मृता ।
ज्यैष्ठशुक्लदशम्याञ्च भवेद्भौमदिनं यदि ॥
ज्ञेया हस्तर्क्षसंयुक्ता सर्व्वपापहरा तिथिः ।

अत्र केवला दशमी पुण्या, हस्तर्क्षसंयुता पुण्यतरा, भौमवार-हस्तर्क्षसंयुता पुण्यतमा ।

दश पापानि यथा,—

पारुष्यमनृतञ्चैव पैशून्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसन्त्रिविधं स्मृतम् ॥
अदत्तानामुपादानं हिंसा चैव विधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्याम् ।
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ॥
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः ।
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ।

भौमहस्तयुतज्यैष्ठशुक्लदशम्यां गङ्गास्नानाद्दशविधपापक्षयः ।

दशहराधिकारे,—

यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां सुसंयतः।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः॥

तिथिद्वैधे परविद्धा ग्राह्या।

चम्पकद्वादश्यां,—

ज्येष्ठे मासि सिते पक्षे द्वादश्यां चम्पकैः शुभैः।
पुष्पैरभ्यर्च्य गोविन्दं नरः किमनुशोचति॥

तिथिद्वैधे पूर्व्वविद्धा ग्राह्या॥

देवस्नाननिर्णयः,—

शृणुध्वं मुनयः स्नानं कृष्णस्य गदतो मम।
रामस्य च सुभद्रायाः पुण्यं सर्व्वाघनाशनम्॥
मासे ज्येष्ठे तु संप्राप्ते नक्षत्रे चन्द्रदैवते।
पौर्णमास्यां तदा स्नानं सर्व्वकालं हरेर्द्विजाः॥
सर्व्वतीर्थमयः कृष्णस्तत्रास्ते निर्म्मलः शुचिः।
तदा भोगवती तत्र प्रत्यक्षं भवति द्विजाः॥
तस्माज्ज्येष्ठ्यां समुद्धृत्य हैमाद्यैः कलशैः शुभैः।
कृष्णरामाभिषेकार्थं सुभद्रायाश्च भो द्विजाः॥
कृत्वा सुशोभनं मञ्चं पताकाभिरलङ्कृतम्।
तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं द्विजाः॥
स्नाप्य मञ्चे सुभद्राञ्च जयमङ्गलनिस्वनैः।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः॥

गृहस्थाः स्नातकाश्चैव यतयो ब्रह्मचारिणः ।
स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥
तथा समस्ततीर्थानि पूर्व्वोक्तानि द्विजोत्तमाः ।
सोदकैः पुष्पसंमिश्रैः स्नापयन्ति पृथक् पृथक् ॥
तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं शुभद्राञ्च ते यान्ति पदमव्ययम् ॥
कपिलाशतदानेन यत्फलं पुष्करे कृतम् ।
तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥
जयस्व राम कृष्णेति सुभद्रेति सकृन्नरः ।
वदन्ति मार्ज्जने काले यान्ति ब्रह्मपदं मम ॥
स्नातं पश्यन्ति ये कृष्णं व्रजन्तं दक्षिणामुखम् ।
ब्रह्महत्यादिभिः पापैर्मुच्यन्ते नात्र संशयः ॥
ततः पञ्चदशाहानि मम स्नानादनन्तरम् ।
विरूपां वा सुरूपां वा न पश्येत्-प्रतिमां मम ॥

अत्र उदयव्यापिनी ग्राह्या ।

भूमिरजस्वला,—

वृषान्ते मिथुनस्यादौ तन्मध्ये च दिनत्रयम् ।
रजस्वला स्यात्-पृथिवी कृषिकर्म्मविगर्हिता ॥

संक्रमणदिनं तत्पूर्व्वोत्तरदिनद्वयमिति दिनत्रयमित्यर्थः ।

श्रीगुण्डिचायात्रा,—

आषाढ़स्य शिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥

यात्रोत्सवं प्रवर्त्त्याथ प्रीणयेत्तु द्विजान् बहून् ।
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम ॥
गुण्डिचामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ।
रामं कृष्णं सुभद्राञ्च ते यान्ति भवनं हरेः ।
ये पश्यन्ति सदा कृष्णं सप्ताहं मण्डपे स्थितम् ॥
रामं कृष्णं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते ।
यात्रां कृत्वा गुण्डिचाख्यां विधिवत्सुसमाहितः ॥
आषाढ़स्य शिते पक्षे नरो योषित्तथापि वा ।
दृष्ट्वा रामञ्च कृष्णञ्च सुभद्राञ्च द्विजोत्तमाः ॥
दशपञ्चाश्वमेधानां फलं प्राप्नोति चाधिकम् ।

अत्र पूर्व्वाह्णव्यापिनी ग्राह्या ।

वह्न्यादिदेवताशयनकालाः,—

वह्निः स्कन्दपुरन्दरौ गणपतिः श्रीधर्म्मराट् भास्करौ,-
वायुः पर्व्वतपुत्रिका वसुमती तोयाधिपः केशवः ॥
ब्रह्मा शम्भुगणादयः प्रतिपदारम्भे तिथौ शेरते ।
उत्तिष्ठन्त्यमुना क्रमेण वरदाः स्वे स्वे दिने पूजिताः ॥

आषाढ़शुक्लैकादशी,—

मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
कन्दमूलफलाहारी हृदि शल्यं ममार्पयेत् ।

देवशयनपरिवर्त्तनोत्थापनकालाः,—

शेते विष्णुः सदाऽषाढ़े भाद्रे च परिवर्त्तते ।
कार्त्तिके प्रतिबुध्येत शुक्लपक्षे हरेर्दिने ॥

माधवाद्येषु मासेषु यदा दर्शद्वयं भवेत् ।
द्विराषाढ़ः स विज्ञेयः शेते कर्कटकेऽच्युतः ॥

इयञ्च द्विराषाढ़संज्ञा उत्तरभाविनि सम्वत्सरे हरिस्वापायोपयुज्यते ।

तथोक्तं,—

मेषादिमिथुनान्तेषु यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं मिथुनार्के हरिः स्वपेत् ॥
कर्कटादित्रिके मासि यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदाऽवश्यं कर्कटान्ते हरिः स्वपेत् ॥
पञ्चमासान् हरौ सुप्ते देशे तत्र भयं भवेत् ।
अल्पायुः स भवेद्राजा संग्रामे भयमाप्नुयात् ॥
स्वपेन्नारायणो देवश्चतुर्थे मासि संख्यया ।
न वर्द्धयेत्-स्वापदिनं तदा लोकः सुखी भवेत् ॥

अतः कार्त्तिकान्तमासचतुष्टये शयनं कार्य्यम् ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ॥
मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलाराशिगते तस्मिन् पुनरुत्थापयेद् ध्रुवम् ॥
अधिमासेऽपि पतिते एष एव विधिः स्मृतः ।
ततो विबुध्यते देवः शङ्ख-चक्र-गदाधरः ॥
कार्त्तिके शुक्लपक्षस्य एकादश्यां यथाविधि ।
ततः समुत्थिते विष्णौ क्रियाः सर्व्वाः प्रवर्त्तयेत् ॥

उपाकर्म्मकालाः,—

श्रावण्यां श्रवणा यत्र तत्रोपाकर्म्म कारयेत् ।
योगो नास्ति यदा काले हस्तेनैव तु पञ्चमी ॥

पौर्णमास्यां श्रवणयोगाभावे हस्तयुक्तपञ्चमी, हस्तयोगाभावे केवलपौर्णमास्यां तत्रासम्भवे केवलपञ्चम्यां कर्त्तव्यम् ।

पर्व्वण्योदयिने कुर्य्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ॥
उपाकर्म्म च कर्त्तव्यं कर्कटस्थे दिवाकरे ।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणा न चेत् ॥
विष्णोस्तु शयनादूर्द्ध्वं मासेनाऽन्तरितं द्विजैः ।
उपाकर्म्म सदा कार्य्यं शयनानन्तरं न तु ॥
माधवादित्रिके मासि ह्यधिमासो यदा भवेत् ।
कर्कटे तु हरेः स्वापः पौर्णमास्यामुपाकृतिः ॥
तदनन्तरभाविन्यां कर्कटस्थे तु वाग्यतः ।
मासान्तरितवाक्येन तन्निरासपुरःसरम् ॥
सिंहेऽर्क्के पौर्णमास्यां तु उपाकर्म्म विधीयते ।
श्रावणादित्रिके मासि ह्यधिमासो यदा भवेत् ॥
सिंहेऽर्क्के च हरेः स्वापः श्रावण्यां स्यादुपाकृतिः ।
उपाकर्म्म च हव्यं च कव्यं दुर्गोत्सवं तथा ॥
उत्तरे मासि कर्त्तव्यं पूर्व्वे तन्निष्फलं यतः ।
उपाकर्म्म तथोत्सर्गः प्रसवाहोऽष्टकादयः ॥
मलिम्लुचेऽपि कर्त्तव्या इति छन्दोगगोचरः ।

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य तथाविधि ॥
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ।
पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्द्विजः ।

वेदवाक्यानाम् उपकर्म्माख्यं कर्म्म संस्कारः । उत्सर्गानन्तरं यः पुनरारम्भस्तस्यैवाङ्गं न प्रथमारम्भस्य । तथात्वे दर्शपौर्णमासारम्भाङ्गान्वारम्भणीयावसकृदेव क्रियेत न प्रतिप्रयोगम् ।

छन्दोगानां प्रौष्ठपद्यां हस्तेन वोपाकरणम् । पुष्येणोत्सर्ग इति ।

शुक्लपक्षे च हस्तेन उपाकर्म्मापराह्णिकम् ।

तथा—

अध्यायानामुपाकर्म्म कुर्य्यात्कालेऽपराह्णिके ।
पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ॥
ऋक्-यजुरथर्व्वाणां पूर्व्वाह्ण एव उपाकर्मकालः ।
पर्व्वण्यौदयिके कुर्य्युरित्यभिधानात् ॥

बलदेवपूजा,—

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रिरुषः काले प्रदीपो ज्वलितालये ॥
गावो महिष्यश्छागाद्याः पूज्याः गोभ्यास्तथा दिने ।
पूजनं केचिदिच्छन्ति श्रावण्यां तु गवादिनाम् ॥

पक्षद्वयं देशव्यवस्थया विकल्पः ।

श्रावण्यां पूर्णिमा यत्र मध्याह्नव्यापिनी भवेत् ।
उत्थानं बलदेवस्य नन्दाविद्धां विवर्जयेत् ॥

नन्दायुक्तपौर्णमास्यां कृते उत्थापने बलेः ।
तत्र रोगी भवेद्विप्रो गावो नश्यन्त्यनेकधा ॥

तिथिद्वैधे पूर्व्वदिने रौद्रत्वादपराह्णे पूजानुष्ठानं कर्त्तव्यम् ।

रक्षापञ्चमी,—

रात्रौ रक्षाविधानं कर्त्तव्यम् ।

तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयाऽन्वितः ॥
यस्त्वालिख्य नरो नागान् शुक्लकृष्णादिवर्णकैः ।
पूजयेद्गन्धपुष्पैश्च सर्पान् पायसगुग्गुलैः ॥
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ।
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् ॥
तस्मात्-सर्व्वप्रयत्नेन नागान् संपूजयेद्बुधः ।

अन्यच्च,

श्रावण्यां शुक्लपञ्चम्यां द्वारस्योभयतो लिखेत् ॥
नागानष्टौ गोमयेन दधिदुर्व्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च तान् भक्त्या पूजयन्ति ये ॥
न तेषां सर्पतो वीर भीतिर्भवति कुत्रचित् ।

तथा,

यः श्रावणे श्रवति (१) शीतजले नरेन्द्र !,
रक्षाविधानमिदमाचरते मनुष्यः ।
आस्ते सुखेन परमेण स वर्षमेकं,
पुत्रप्रियादिसहितः स सुहृज्जनैश्च ॥

(१) स्रवति ।

रक्षामन्त्रो यथा,—

घण्टाकर्ण ! महावीर ! सर्व्वव्याधिनिवारण ! ।
सर्व्वोपद्रवसङ्घातविद्रावण ! हरप्रिय ! ॥
कण्ठे यस्य महानीलं भूषणं यस्य पन्नगाः ।
तेजांसि तस्य देवस्य रक्षन्तु मम मन्दिरम् ॥

रज्जुबन्धनमन्त्रो यथा,

येन बद्धो बली राजा दानवेन्द्रो महासुरः ।
तेन त्वामपि बध्नामि रक्षामाचर मा चल ॥

---

## अथ जन्माष्टमी ।

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतमे जातः कृष्णोऽसौ देवकीसुतः ॥

तत्र जन्माष्टमीव्रतं नित्यम्, अकरणे दोषश्रवणात् । यथा,—

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति ब्रह्मराक्षसः ॥ इति
पुत्रसन्तानमारोग्यं धनधान्यर्द्धिमद्‌गृहम् ।
शालीक्षुयवसम्पूर्णं मण्डलं सुमनोहरम् ॥
तस्मिन् राष्ट्रे प्रभुर्भुंक्ते दीर्घायुर्मनसेप्सितान् ।
परचक्रभयं नास्ति तस्मिन् राष्ट्रेऽपि पाण्डव ! ॥
पर्ज्जन्यः कालवर्षी स्यादितिभ्यो न भयं भवेत् ।

तथा,—

पुत्रानवाप्य समुपैतिपदं स विष्णोः। इत्यादिफलश्रवणात् काम्यश्च।

एषैव जन्माष्टमी रोहिणीयोगे जयन्तीसंज्ञां लभते।

तदुक्तं—

रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तमाः।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः॥
यद्बाल्ये यच्च कौमारे यौवने वार्द्धके तथा।
बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः॥

जयन्ती च इत्यादि फलश्रवणात् काम्या, नित्या च।

जयन्त्यां भोजने दोषः स्मर्य्यते—

शूद्रान्नेन च यत्पापं शवहस्तस्य भोजने।
तत्पापं लभते कुन्ति! जयन्त्यां भोजने कृते॥ इति।

तत्र रोहिणीयोगे तु गुणफलसम्बन्धात् "गुणलोपे तु मुख्यस्येति" न्यायेन रोहिणीयोगाभावे केवलाष्टम्यामुपवासः कार्य्यः। "वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिन" इति वीप्साश्रवणात्।

अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत्।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः॥
मुहूर्त्तो विजयो नाम यत्र जातो हरिः स्वयम्।
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा।

"रात्रर्द्धपूर्वापरगा जयन्ती कलयापि चे"त्यादिबहुवचनसंवादात् पूर्व्वापरदण्डद्वयोपेतमर्द्धरात्रमिह मुख्यः कालः।

तदुक्तं,—

रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्चनं शौरेर्हन्ति पापं पुराकृतमिति ॥

तेन अर्द्धरात्रे रोहिणीयोगाभावे केवलाष्टम्यां पूजा कार्य्या, तिथेर्मुख्यत्वात् ।

वर्ज्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।

अविद्धायां सऋक्षायां जातो देवकिनन्दनः ॥

इति वचनात् सप्तमीविद्धा न ग्राह्या । रोहिणीयोगे तु,—

"कार्य्या विद्धाऽपि सप्तम्या रोहिणीसंयुताऽष्टमी"-ति वचनाद्-ग्राह्या, इदं परदिनेऽर्द्धरात्रे जयन्तीयोगाभावे बोध्यम्, एवं च परदिने अर्द्धरात्रे अष्टम्यभावे पूर्व्वदिने जन्माष्टमी कार्य्या ।

यत्तु,—

प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः ।

यैः कृता श्रावणे मासि रोहिणीसंयुताऽष्टमी ॥

किं पुनर्बुधवारेण सोमेनापि विशेषतः ।

किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

सऋक्षाऽपि न कर्त्तव्या सप्तमीसंयुताऽष्टमीति ।

यत्र तिथिनक्षत्रद्वयात् दिनद्वयेऽप्यर्द्धरात्रे जयन्तीयोगस्तत्-परमेव ।

यत्तु,—

उदये चाष्टमी किञ्चित् सकला नवमी यदि ।

प्राजापत्यर्क्षसंयुक्ता सा भवेद्बुधसंयुता ॥

सोमवारेण संयुक्ता कुलकोट्यास्तु मुक्तिदा।
अपि वर्षशतेनापि लभ्यते वा न वा विभो!॥ इति।

तद्वारविशेषयोगाधीनम्।

मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते।
अष्टम्यां रोहिणीऋक्षं तां पुण्यां समुपावसेत्॥

एतदपि अर्द्धरात्रे अष्टमीसद्भावे बोध्यं।

यत्तु,—

पूर्व्वविद्धाष्टमी या तु उदये नवमीदिने।
मुहूर्त्तमपि संयुक्ता संपूर्णा साऽष्टमी भवेत्॥

इति वचनादर्द्धरात्रे अष्टम्यभावेऽपि रोहिणीयोगे जयन्तीभेद-उपपादितः जयन्तीभेदेषु यदि बुधवारो सोमवारो वा भवति, तदा फलाधिक्यं भवतीत्युक्तम्। तत्तु अर्द्धरात्र एव जयन्तीयोग-इति बहुवचनविरोधादनादेयम्। जयन्तीयोगाभावेऽपि केवला-ष्टम्यामुपवासविधानात्, सर्व्वत्र तिथेरेव मुख्यत्वप्रतिपादनात्। तद्वचनस्य वारविशेषसंयोगाधीनत्वस्य "उदये चाष्टमी किञ्चिदि"-ति वचनेन स्पष्टत्वात्। विद्याकरवाजपेयिभिरेवमेव व्यवस्थापितत्वात्, यदि पूर्व्वदिने रोहिणी महती परेद्युः स्वल्पा। अष्टमी निशीथा-दूर्द्ध्वं प्रवृत्ता पूर्व्वदिने स्वल्पा परेद्युर्महती, दिनद्वये च निशीथयोगो-नास्ति, तदा परत्रैवोपवासः।

सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम!,
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्-यदि?,
तदाष्टयामिकं प्रोक्तं पुण्यं व्यासादिभिः पुरा॥

इति वचनात्। तत्रायं निर्णयः, यस्मिन् संवत्सरे रोहिणी-योगो नास्ति तत्र शुद्धाष्टम्यामसन्देहः। विद्धा चतुर्द्धा पूर्व्वेद्युरेव निशीथव्यापिनी, परेद्युरेव निशीथव्यापिनी, उभयत्र निशीथ-व्यापिनी, उभयत्रानिशीथव्यापिनी चेति। तत्र प्रथमायां पूर्व्वदिने व्रतं द्वितीयायां द्वितीयदिने, तृतीयचतुर्थयोरुत्तरदिन एव, सङ्कल्प-कालमारभ्य सर्व्वकर्म्मकालस्य अष्टमीसम्बन्धात्। तथा यदि पूर्व्वदिने निशीथे जयन्तीयोगस्तदा पूर्व्वेद्युरेव "कार्य्या विद्धाऽपि सप्तम्ये"ति वचनात्। परदिने निशीथयोगे परेद्युरेव, उभयत्र निशीथयोगे परेद्युरेव।

"सा सत्त्वापि न कर्त्तव्ये"ति वचनात्। उभयत्र निशीथयोगा-भावेऽपि परेद्युरेव, सङ्कल्पकालमारभ्य प्रवृत्तत्वात्।

यत्तु,—अष्टम्यल्पत्वेऽपि पूर्व्वविद्धाष्टमीति वचनेन जयन्ती उक्ता, तत्तु नातीवाद्रियते, पूर्व्वदिने निशीथे जयन्तीयोगाभावे परत्र वारनक्षत्रयोगे अष्टम्यल्पत्वेऽपि ग्राह्यमिति निरूढः पन्थाः। तथाच, अष्टम्यां यावत्फलं रोहिणीयोगे तदधिकं, वारविशेषयोगे ततोऽप्यधिकं,

अर्द्धरात्रमेव कर्म्मकालः, तथा ऋक्षयोगाभावे कर्म्मकालत्वादर्द्ध-रात्रेऽष्टमीसद्भाव एव अपेक्षितः, अष्टम्यल्पत्वे नक्षत्रवारविशेषयोगे उपादानं न हि वचनस्यातिभार इति।

---

## अथ पारणम्।

तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्।
सर्व्वेष्वेवोपवासेषु दिवा पारणमिष्यते॥
अथवा पुण्यहानिः स्याद्दते धारणपारणात्।
तिथिनक्षत्रयोगे तु उपवासो यदा भवेत्॥
पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः।
तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा।
अर्द्धरात्रेऽपि वा कुर्य्यात्-पारणं त्वपरेऽहनीति॥

रात्रावपीत्यर्थः।

जयन्त्यां पूर्व्वविद्धायामुपवासं समाचरेत्।
तिथ्यन्ते चोत्सवान्ते च व्रती कुर्य्यात्तु पारणम्॥

एतदशक्तविषयम्।

प्रातरेव दुर्गोत्सवं समाप्य पारणं कुर्य्यात्।
तिथ्यृक्षयोर्द्वयोरन्ते उत्तमं पारणं स्मृतम्॥
एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम्।

---

## अथ सप्तपुरिका अमावास्या।

अमावास्या च पित्र्येण नक्षत्रेण च संयुता।
सप्तप्रकाराः पितरो जाताः कमलसम्भवात्॥
तेभ्यः पूजा च कर्त्तव्या तत्र सर्व्वात्मना बुधैः।
पिण्डो देयस्तथा पूपश्राद्धं कार्य्यं विजानता॥

दर्शे सुवर्णवटकैः पतिमाराधयन्ति याः ।

ताः सर्व्वाः सुभगा नार्य्यः पुत्रवत्यो वराङ्गनाः ॥

न वैधव्यं भवेत्तासां पुनः सप्तसु जन्मसु ।

गौरीव्रतम्,—

गुड़पूपाश्च दातव्या मासि भाद्रपदे शिते ।

तृतीयायामुपोष्यं वा वासुदेवस्य प्रीतये ॥

उमां शिवं गणेशञ्च विधिवत् पूजयन्ति याः ।

गौरीवरप्रदानेन परं सौभाग्यमाप्नुयुः ॥

तिथिद्वैधे परदिने कार्य्यम् ।

मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।

इति माधवीये । व्रतविधिस्तु पाश्चात्यदेशे प्रसिद्धः ।

शिवचतुर्थी,—

मासि भाद्रपदे शुक्ले चतुर्थी शिवपूजिता ।

तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।

तावत्-सहस्रगुणितं प्रसादाद्दन्तिनो नृप ! ॥

अत्र पूजा अपराह्णे कर्त्तव्या रौद्रत्वात् ।

तिथिद्वैधे परदिने कर्त्तव्या ।

हरितालिका,—

शुक्लपक्षे चतुर्थ्यां तु सिंहे चन्द्रस्य दर्शनम् ।

मिथ्याभिशंसनं कुर्य्यात्तस्मात् पश्येन्न तं सदा ॥

नारायणोऽभिशस्तस्तु निशाकरमरीचिषु ।

स्थितश्चतुर्थ्यामद्यापि मनुष्याय पतेच्च सः ॥

अतश्चतुर्थीचन्द्रं तु प्रमादाद्वीक्ष्य मानवः।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाऽप्युदङ्मुखः॥

धात्रेयिकावाक्यं यथा,—

सिंहः प्रसेनमवधीत्-सिंहो जाम्ववता हतः।

अत्र सिंहे चन्द्रदर्शनस्य निषिद्धत्वान्मलमासपातेऽपि निषिद्धम्।

तदुक्तं,—

सीमन्तः प्रेतकृत्यञ्च नवशय्या नवः शशी।
मलमासेऽपि कर्त्तव्यं निमित्तविहितञ्च यत्॥

नवः शशी चन्द्रवन्दापनेति केचित्।

गणेशचतुर्थी,—

विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन!।
सर्व्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात्॥
विनायकव्रते कार्य्या सर्व्वमासेषु माधव!।
चतुर्थी च जयायुक्ता गणनाथस्तुतोषिणी।

एतेन, सर्व्वचतुर्थीषु विनायकपूजा विघ्नविनाशिनी।

चतुर्थ्यान्तु गणेशस्य गौर्य्याश्चैव विधानतः।
पूजां कृत्वा लभेत्-सिद्धिं नरः सौभाग्यमाप्नुयात्॥
गणेशं कारयेत्-पूजां लड्डुकादिविभावनात्।
चतुर्थ्यां विघ्ननाशाय सर्व्वकामप्रसिद्धये॥
भाद्रे शुक्लचतुर्थी च भौमवारेण संयुता।
महाचतुर्थी विज्ञेया तत्र विघ्नेशमर्चयेत्॥

व्रतादिनियमे चेष्टं लभते नात्रसंशयः।
अमा वै सोमवारेण रविवारेण सप्तमी॥
चतुर्थी भौमवारेण अक्षयादपि चाक्षया।

तत्र "प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेदि"ति वचनाद्विनायकव्रतस्य मध्याह्नः कालः, तिथिद्वैधे जयायुक्ता कार्य्या।

ऋषिपञ्चमी,—

भाद्रे शितेऽपराह्ने तु पञ्चमी यत्र तिष्ठति।
विश्वामित्र ऋषिः स्त्रीभिः पूज्यः सन्तानवृद्धये॥

तिथिद्वैधे पञ्चमी पूर्व्वविद्धा ग्राह्या।

षष्ठीयुक्ता पञ्चमी या महर्षेस्तस्य पूजने।
पतिपुत्रहता नारी सा नारी नरकं व्रजेत्॥

इति (१) वचनात्।

षष्ठीदेवीषष्ठी,—

यया भाद्रस्य शुक्लायां षष्ठी षष्ठ्यां प्रपूजिता।
जीवत्पुत्रा च सौभाग्यधनधान्यसुतान्विता॥
तस्माद्यत्नेन नार्य्यश्च पूजयन्ति सदैव तु।

अत्र "दैविकानि च पूर्व्वाह्ने" इति पूर्व्वाह्नव्यापिनी ग्राह्या।

कुक्कुटीव्रतम्,—

भाद्रे मासि शिते पक्षे सप्तम्यां ललितालये।
स्नात्वा शिवं लेखयित्वा मण्डले च सहाम्बिकम्॥
पूजयेच्च तदा तस्यां दुष्प्रापं चैव विन्दति।

---

(१) इति दोषश्रवणात्।

अगस्त्यार्घ:,—

पुरा युगसहस्रन्तु विष्णुर्वारुणिना मुने ! ।
आराधित: प्रसादार्थं तस्मै प्रादाद्वरं हरि: ॥
दक्षिणाशां मुने ! गत्वा गच्छ तिष्ठ स्ववारुणे ! ।
हितार्थं सर्व्वलोकानां मन्नियोगाद्धृतव्रत ! ॥
ये त्वां तत्र स्थितं भक्त्या नार्चयिष्यन्ति मानवा: ।
तेषां संवत्सरं पुण्यं मत्प्रसादाद्भवेत्तव ॥
ये त्वां महाविधानेन पूजयिष्यन्ति वारुणे ! ।
श्वेतद्वीपं गमिष्यन्ति तेन रामप्रसादत: ॥
वेदवेदाङ्गविद्वांसो धनधान्यसमन्विता: ।
वारुणे ! ते भविष्यन्ति लोकेऽस्मिन्नर्घदास्तव ॥
अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनै: ।
अर्घं दद्युरगस्त्याय ये वसन्ति महोदये ॥

भास्करे कन्यामप्राप्ते सिंहादित्यस्य सत्रिभागैस्त्रिभागसहितै-स्त्रिभिर्दिनै: त्रयोदशदिनैरित्यर्थ: । एतत्तु महोदयस्थानाम् ।

दुर्व्वाष्टमी,—

ब्रह्मन् ! भाद्रपदे मासि शुक्लाष्टम्यामुपोषित: ।
महेशं पूजयेद्यस्तु दुर्व्वया सहितं वने ॥

तथा,—

तस्मात् संपूजनीया सा प्रतिवर्षं वधूजनै: ।
सुखसन्तानजननी भ्रातृसौख्यप्रदा सदा ॥

अत्र तिथिद्वैधे पूर्व्वविद्धा ग्राह्या। तदुक्तं,—

श्रावणी दुर्गनवमी तथा दुर्व्वाष्टमी च या।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति॥
तथा मासि भाद्रपदे शुक्ला या चाष्टमी नृप!।
दुर्व्वाष्टमीति विज्ञेया पूर्व्वविद्धा प्रशस्यते॥

वामनजन्म,—

नभस्ये शुक्लपक्षे तु द्वादश्यां श्रवणेऽहनि।
बलेस्तु बन्धनं कर्त्तुं मध्याह्ने वामनस्त्वभूत्॥
जयन्ती वामनाख्या सा सेवोपोष्या नरोत्तमैः।
सर्व्वपापप्रशमनी सर्व्वकामप्रदायिनी॥
एकादश्यां भवेद्योगो द्वादश्यां श्रवणस्य च।
पूर्व्वाह्ने वाथ मध्याह्ने सा तिथिर्महती स्मृता॥
द्वादशीं श्रवणर्क्षञ्च स्पृशेदेकादशी यदि।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञकः॥

एकादश्यां श्रवणयुक्ता द्वादशी यदि मध्याह्ने भवति, सा विष्णुशृङ्खला।

तस्मिन्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्॥

शक्रोत्थापनम्,—

भाद्रे मासि शिते पक्षे श्रवणद्वादशी यदि।
शक्रमुत्थापयेत्तत्र श्रवणे तद्वियोगतः॥

तथाच श्रवणद्वादश्रीयोगाप्राप्तौ श्रवणाद्यभाग एव शक्र-मुत्थापयेत् ।

श्रवणाद्धरणौं यावत् पूजां कृत्वा विधानत: ।
रात्रौ विसर्जयेद्देवं मन्त्रेणानेन पाण्डव ! ॥
पूजामन्त्रस्तु भविष्योत्तरे द्रष्टव्यम् ।
एवं य: कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ! ॥
पर्जन्य: कालवर्षी स्यात्तस्मिन् देशे न संशय: ।

अनन्तचतुर्दशी,—

आराधिते महेन्द्रे तु ध्वजाकारेषु यष्टिषु ।
तत: शुक्लचतुर्दश्यामनन्तं पूजयेद्धरिम् ॥

अत्र औदयिकी तिथिर्ग्राह्या, "पूर्व्वाह्णो वै देवाना"मिति श्रुते: । सा च त्रिमुहूर्त्तव्यापिनी ।

तथा,—

भाद्रे मासि शिते पक्षे अघोराख्या चतुर्दशी ।
तामुपोष्य नरो याति शिवलोकमयत्नत: ॥
अनन्तव्रतमेतद्धि सर्व्वपापहरं परम् ।
सर्व्वकामप्रदं नृणां स्त्रीणाञ्चैव युधिष्ठिर ! ॥
मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटम् ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक् ।
आवर्त्तने यदा हि स्यादनन्तस्य चतुर्दशी ॥

तस्मिन् पूजा हविष्यञ्च व्रतं चैव विधीयते।
द्वयोरावर्त्तनाभावे ग्राह्या मध्यंदिने तिथिः॥
द्वयोरावर्त्तने ग्राह्या परविद्धा चतुर्दशी।

इति व्रतान्तरम्।

इन्द्रपौर्णमी,—

पञ्चदश्यां महेन्द्रस्य पूजयेत्-केलिकौतुकैः।
गीतवादित्रमाङ्गल्यैर्भूपतिर्भूतये निशि॥

दुर्गाशयनं,—

सर्व्वदेवोत्थिता तिष्ठेद्दुर्गा लोकहिताय वै।
स्वपेद्भाद्रशिताष्टम्यां त्रिपञ्चदिवसात्-परम्॥
उत्तिष्ठत्यर्च्चिता देवी षोडशेऽहनि रात्रितः।
दिवा स्वापे भवेद्रोगो निशुत्थाने जनक्षयः॥
दिनक्षयो यदि भवेत्-स्वपेद्दर्शांश्चतुर्दशे।
न वर्द्धयेत्-स्वापदिनं तिथिवृद्धौ कदाचन॥

शरत्कालीनदुर्गापूजा,—

तत्र दिनैः षोड़शभिः नवभिरथ पञ्चभिस्त्रिभिर्द्वाभ्याम्।
एकेन च यद्विहितं क्रमशः प्रस्तौमि तद्विधानमहम्॥
सप्तम्यामुदिते सूर्य्ये परतश्चाष्टमी भवेत्।
तत्र दुर्गोत्सवं कुर्य्यान्नकुर्य्यादपरेऽहनि॥
अष्टमीं चेदनुप्राप्य अस्तं याति दिवाकरः।
तत्र दुर्गोत्सवं कुर्य्यान्नकुर्य्यादपरेऽहनि॥

वृथा पशुघ्नतां याति नवमीवासरार्च्चिते।
कर्म्मणो यस्य यः कालः सा तिथिस्तदुपक्रमे॥
विद्यमाना भवेदङ्गं नोज्झितोपक्रमेण तु।

इति वचनादुपक्रमकालानुरोधेन अस्तमयात्पूर्व्वमष्टमीसद्भावे पूजा कार्य्या। कर्म्मणो बलिदानाङ्गत्वाद्बलिदानस्य प्रधानत्वाद्व्याप्तिनिरपेक्षिता। इदञ्च संयोगपृथक्त्वेन नित्यं काम्यञ्च।

यथा,—

एवञ्च यजनं कुर्य्याद्वर्षे वर्षे युधिष्ठिर!।
यो वै न पूजयेत् सम्यक् चण्डिकां भक्तवत्सलाम्॥
भस्मीकृत्यास्य पुण्यानि निर्द्दहत्यवमानिता।
यदा दैववशादस्मिन् मासे पूजा न जायते॥
तदा तु कार्त्तिकाष्टम्यां कर्म्म चैतत्प्रकीर्त्तितम्।
कृष्णाष्टम्यां समारभ्य यावच्छुक्लाष्टमी भवेत्॥
दिवसे दिवसे पूर्व्वं कर्म्म प्रोक्तं प्रशस्यते।
आश्विने कार्त्तिके वापि कृष्णाष्टम्यां समारभेत्॥

तस्मान्नित्यम्।

सर्व्वकामार्थसिद्ध्यर्थं कर्म्मेदं दुर्लभं स्मृतम्।
कर्म्मेदं कुरुते यस्तु समृद्धिस्तस्य जायते॥
वेदविच्च भवेन्मन्त्री त्रिवर्गं साधयेत्-क्रमात्।
कृत्वाऽप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः॥

इत्यादिफलश्रवणात्काम्यम्। कृष्णाष्टम्यादिशुक्लाष्टमीपर्य्यन्तं षोड़शदिनात्मकं व्रतम्।

तथा,—

आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रिकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

सा च प्रतिपत्पूर्व्ववदमावास्यायुता ग्राह्या उपक्रमानुरोधात् ।

नवरात्रं प्रयत्नेन प्रत्यक्षं सा समर्चिता ।
नाशयत्येव विघ्नौघान् सुगतिञ्चैव दास्यति ॥

पञ्चदिनपक्षे पञ्चम्यादि कुर्य्यात् ।

व्रती सम्पूजयेद्देवीं सप्तम्यादिदिनत्रये ।
द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ॥

एतन्महानवम्यन्तं कार्य्यम् ।

तथा,—

ऋक्षत्रयेऽपि मूलादौ नवम्यामाश्विने शिते ।
चण्डिकामुपहारैश्च पूजयेद्राष्ट्रसिद्धये ॥

द्विदिनपक्षे,—

अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽश्विने मासि विशोको जायते नरः ॥
मासि चाऽश्वयुजे वीर ! शुक्लपक्षे त्रिशूलिनीम् ।
नवम्यां पूजयेद्यस्तु तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
तत्फलं लभते वीर ! देवी देवगणैर्वृतः ॥
आश्विने मासि शुक्लायां नवम्यां निशि चण्डिकाम् ।

पूजनाच्छत्रुनाश: स्याद्राष्ट्रं जयति लीलया।
दुर्गां सम्पूज्य दुर्गाणि नवम्यां तु रतीक्रया॥
संग्रामे व्यवहारे च सदा विजयमश्नुते।
प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च॥
महाशब्दो नवम्याश्च लोके ख्यातिं गमिष्यति।
य: करोत्युपवासञ्च नवम्यां विधिवन्नृप!॥
सफलं प्राप्नुयात्-सर्व्वं राजसूयाश्वमेधयो:।
अश्वयुक्शुक्लपक्षस्य नवम्याञ्च वरानने।
उपवासपरो भूत्वा यस्तां पश्यति भक्तित:॥
तस्य पापं क्षयं याति तम: सूर्य्योदये यथा।
मासि चाऽश्वयुजे शुक्लनवमी या सुरार्च्चिता॥
तस्यां यत्क्रियते वीर! नरै: स्नानादिकं प्रभो!।
तत् सर्व्वमक्षयं याति सर्व्वसिद्धिकरं तथा॥
ब्राह्मणै: क्षत्रियैर्वैश्यै: शूद्रैश्चान्यैश्च सेवकै:।
एवं नानाम्लेच्छगणै: पूज्यते सर्व्वदस्युभि:॥
स्वयं वाऽप्यन्यतो वाऽपि पूजयेत्-पूजयेत्सदा।

तत्र,—

पूजा तु त्रिविधा प्रोक्ता सात्त्विकादिविभेदत:।
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषै:॥
राजसी बलिदानेन नैवेद्यै: सामिषैस्तथा।
सुरामांसोपचारैश्च जपयज्ञैर्विना तु या॥
विना मन्त्रैस्तामसी सा किरातजनसेविता।

महाष्टमी,—

अत्राष्टम्यां भद्रकाली दक्षक्रतुविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थे पूजनीया सा तस्मिन्नहनि मानवैः ।

अत्र अहनीति पदोपादानाद्दिवा एका पूजा पूर्व्वाह्णे, द्वितीया यामिनीपूर्व्वदले ।

पूजयित्वा ततो देवीमर्द्धरात्रेऽष्टमीषु च ।
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।

इति वचनात्तृतीया यामिनीद्वितीयदले ।

बलिकालं ततो विद्यादर्द्धरात्रं न संशयः ।

इति वचनान्निशीथव्यापिन्यामेव महाष्टमी कर्त्तव्या। कर्म्मणो-बलिदानान्तत्वाद्वलिदानस्य प्रधानत्वात् ।

तदुक्तम्,—

निशायामष्टमी यत्र तत्र दुर्गोत्सवो भवेत् ।
अन्यत्र चोपवासादौ नवविद्धाष्टमी भवेत् ॥
अष्टमी निशि संयुक्ता पूजां गृह्णाति पार्व्वती ।
अष्टमी नवमीविद्धा तत्र दुर्गां न पूजयेत् ॥
पूजयन् क्लेशभागी स्याद्यथा वज्रहतो गिरिः ।

यत्तु,—बलिदानं विना त्रिकालपूजादिकं समाचारे क्रियते, तत्तु, त्रिकालव्यापिन्यां तिथौ क्रियते चेन्नैव क्षतिः। प्रकृतिव-द्विकृतिः कर्त्तव्येति महाष्टमीपर्य्यन्तं वा कार्य्यम् ।

पूजनीया शिवा सर्व्वैरेकधाऽभिन्नपर्व्वणि।
भिन्ने भूपादिभिः पूर्व्वं परं ग्राह्यं द्विजातिभिः॥
पूर्व्वपर्व्वणि भुक्त्यर्थं मुक्त्यर्थं च परेऽहनि। इति।

उपवासव्रतादौ नवमीविद्धा ग्राह्या। तत्र त्रिमुहूर्त्तव्यापिन्यास्तिथेर्ग्रहणम्। दुर्गाव्रतपूजादौ "नक्तकाले तु सम्प्राप्ते मण्डलं कारयेद्-व्रती"ति रात्रौ पूजाविधानात् कर्म्मकालत्वाद्रात्रिव्यापिन्यां पूजां कुर्व्वन्ति।

देव्या गृहे तु शास्त्राणि पूजनीयानि पण्डितैः।
वाद्यभाण्डानि चान्यानि विविधान्यायुधानि च॥
रात्रौ च शिल्पिशास्त्राणि पूजनीयानि सर्व्वदा॥ इति।

अत्र आश्विने अधिमासपाते, "कृष्णाष्टमीं समारभ्य यावच्छुक्लाष्टमी भवेदि"ति, वचनात्

दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः।
पूर्व्वत्र प्रतिसिद्धानि परत्रान्यच्च दैविकमिति॥

मलमासे—तन्निषेधे शुद्धमासे कर्त्तव्यत्वाभिधानाच्छुद्धकृष्णाष्टम्यां समारभ्य शुद्धशुक्लाष्टम्यां समापनीयम्।

आरब्धस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः।
प्रवृत्तमखिलं कर्म्म तदाऽनुष्ठेयमेव तु॥

इति शुद्धमासे आरब्धस्य मलमासे अनुष्ठेयत्वात्। असम्भवे नवरात्रविधानेन कर्त्तव्यम्।

महानवमी,—

नवम्यां विधिवद्बलिमिति वचनाद्बलिदानकाल एव मुख्यकालः।

ततः पूर्व्वदिने महाष्टमी कार्य्या ।

श्रावणी दुर्गनवमी तथा दुर्व्वाष्टमी च या ।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति ।

पशुनिर्णयः,—

जयाभिलाषी नृपतिर्नृपशुं परिकल्पयेत् ।
मेषश्च महिषश्चैव छागः कुक्कुट एव च ॥
एते च पशवो ज्ञेया दुर्गाया बलिकर्म्मणि ॥

कामार्थी कुक्कुटं दद्यात् ।

सर्व्वकामार्थसिद्ध्यर्थं माहिषं बलिमाहरेत् ।

अन्यच्च,—

पुत्रार्थी माहिषं चैव शान्त्यर्थी छागमेव च ।
वश्याकाङ्क्षी वराहं च विद्यार्थी मेषमेव च ॥
धर्म्मार्थी कृष्णहरिणमुष्ट्रं चैव विनाशने ।
राष्ट्रभङ्गे धनाभावे पशूनामप्यसम्भवे ॥
पिष्टकेनापि कुर्वीत नापशुः स्यात् कदाचन ।
हीनाङ्गानधिकाङ्गांश्च कृशान् बालांश्च वर्ज्जयेत् ॥
स्त्रियोऽनुकम्प्या देव्यास्तु स्त्रीपशुं न प्रकल्पयेत् ।
शरत्काले महापूजा क्रियते या च वार्षिकी ॥
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ।
सर्व्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ॥
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥

इति वचनाच्चण्डिकास्तोत्रं पठनीयम् ।

अष्टम्यां बोधयेद्देवीं नवम्यां च प्रभावतः।
ततः प्रभातसमये मुखप्रक्षालनं जलम्॥
जातीलवङ्गतोयेन क्षालयेन्मुखमन्ततः।
दन्तकाष्ठं दशम्यां तु प्रदद्यात् कार्य्यसिद्धये॥
एकादश्यामलक्तं च द्वादश्यां नखशोधनम्।
त्रयोदश्यां ततो दद्याद्गात्रोद्वर्त्तनकं शुभम्॥
चतुर्दश्यां तु देव्यास्तु केशसंयमनं स्मृतम्॥
अमावस्यायां गन्धं तु गात्रोद्वर्त्तनिकं तथा।
प्रतिपत्सु च सिन्दूरमञ्जनं चापरेऽहनि॥
तृतीयायां शुभे वस्त्रे चतुर्थ्यां भूषणं स्मृतम्॥
पञ्चम्यां सघृतैः स्नानं षष्ठ्यां मद्योपहारकैः।
मदनीयं जातीफलादि दद्यात्।
सप्तम्यां पत्रिका पूजा नानोपकरणैः शुभैः।
नानोपहारकैर्विल्वपत्रमालां दद्यात्।
अष्टम्यां पूजयेद्देवीं नानोपकरणैः शुभैः।
पशुरक्तैः समांसान्नैर्यथा विभवशक्तितः॥
नवम्यां बलिदानं च विजयार्थी नृपो नरम्।
दशम्यां प्रेषणं कुर्य्यात्-क्रीड़ाकौतुकमङ्गलैः॥

अपराजिता,—

श्रवणेन युता चेत्-स्याद्दशमी चापराजिता।
तत्र नीराजनं कृत्वा यात्रा कार्य्या जिगीषुणा॥

दुर्गोत्सवानन्तरवैष्णवर्चे तिथौ दशम्यामपराजितायाम् ।
रामो जिगीषुर्दशदिक्षु वेधं कृत्वा जगामारिपुरं प्रवीरः ॥
लसत्-सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्व्वकार्य्यार्थसाधकः ॥
सायंकाले यदा न स्याद्दशमी चापरेऽहनि ।
नवमीसंयुता कार्य्या सर्व्वदा जयकांक्षिभिः ॥
नवमीशेषसंयुक्तादशम्यां विजयोत्सवम् ।
कुरु राम ! त्वमित्युक्तं वशिष्टेन महात्मना ॥
कार्य्यवशात्-स्वयमगमेऽभूद्भर्त्तुः केचिदाचार्य्याः ।
छत्रायुधाद्यभिष्टं वैजयिकं निर्गमे कुर्य्यात् ॥
हस्तागते तु सूर्य्ये यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत्तया प्रयातस्य क्षिप्रमरातिर्वशमुपैति ॥
कृत्वा नीराजनं राजा बलवृद्धौ यथाबलम् ॥
शोभनं खञ्जनं पश्येज्जलगोगोष्ठसन्निधौ ।

कौमुदीपौर्णमासी,—

आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।
सुगन्धैर्निशि सर्व्वेशमद्भैर्जागरणं चरेत् ॥
निशीथे वरदा लक्ष्मीः को जागर्त्तीति भाषिणी ।
तस्मै ऋद्धिं प्रयच्छामि अक्षैः क्रीड़ां करोति यः ॥
नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत् ॥

बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत्।
को जागर्त्ति वचो विधाय पुरुषं लक्ष्मीस्त्यजेत्पुस्तकम्।
शुक्लां पञ्चदशीं निशीथसमये लोकस्ततो जागृयात्॥
एवं कृत्वा विधानेन द्यूतक्रीड़ां समाचरेत्।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवान्यवर्णजैः॥
ताम्बूलैर्नारिकेलैश्च वस्त्रैश्चैव कपर्दकैः।
परस्परञ्च दातव्यं पूज्यदेवीं समर्पयेत्॥
एवं यः कुरुते भक्त्या तस्य देवी प्रिया भवेत्।

अत्र निशीथ इति चाभिधानाद्रात्रिकृत्यमिदं, तिथिद्वैधे अस्तादुपरि घटिकाद्वयमधिकं व्याप्नोति पञ्चदशी, तदा परदिने कर्त्तव्यं, "त्रिभिर्मुहूर्त्तैर्विध्यतो"ति वचनात्, अन्यथा पूर्व्वदिन एव, निशीथव्याप्तेरधिकत्वात्।

कार्त्तिककृष्णपक्षमधिकृत्य,—

गोष्ठाष्टम्यां गवां पूजा गोग्रासो गोप्रदक्षिणम्।
गवामनुगमः कार्य्यः सर्व्वान् कामानभीप्सता॥

प्रदीपामावास्यां श्राद्धप्रकरणे वक्ष्यामः।

सुखरात्रिः,—

कार्त्तिके मासि शुक्लादौ तिथौ च कुसुमांशुकैः।
सुखाय सुखरात्रिः स्यात्-कार्य्या राष्ट्रसुखाय वै॥

शुक्लादाविति अमावास्यायामित्यर्थः।

तदुक्तं,—

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रेरुषःकाले प्रदीपो ज्वलितालये ॥
सुशुभैः कुसुमैर्गन्धैर्दधिगोरचनाफलैः ।
बन्धून् बान्धवबन्धूंश्च पृच्छेत् कुशलया गिरा ॥
पूजयेच्च तथा लक्ष्मीमलक्ष्मीमलनाशिनीम् ।
लक्ष्मीः पञ्चपताकाभिर्द्विजमेकं गृहे वसेत् ॥

प्रथमाष्टमी,—

उत्कलेषु प्रथमोत्पन्नस्य बन्दापना क्रियते समाचारात् । तत्र औदयिकतिथिरेव ग्राह्या । "यां तिथिं समनुप्राप्ये"ति वचनात् । बन्दापनायोग्यकाललाभे सति ग्राह्या । "कर्म्मणो यस्य यः काल"-इति वचनात् ।

दीपावलिकोत्सवः,—

तुलास्थे दीपदानेन पूजा कार्य्या महाफला ।
दीपवृक्षाश्च कर्त्तव्या दीपचक्रमथापरम् ॥
दीपयात्रा च कर्त्तव्या चतुर्दश्यां कुहूषु च ।
शिनीवालीषु अथवा वत्स ! कार्य्यं महाफलम् ॥

एतेन चतुर्दश्यामावास्याप्रतिपद्दिनेषु दीपयात्रा प्रतिपादिता ।

नरकाय प्रदातव्यो दीपः सम्पूज्य देवताम् ।
ततः प्रदोषसमये दीपान् दद्यान्मनोरमान् ॥

नरकाय नरकगमनपरिहाराय, तुलामावास्या चैत्रशुक्लादि-कामावास्या इत्यभिप्रायेण ।

प्रावरणषष्ठी,—

या तु मार्गशिरे शुक्लमहाषष्ठी नराधिप!।
देवद्विजसुहृद्भ्यश्च शीतघ्नं तत्र कारयेत्॥

शीतघ्नशब्देन वस्त्रकम्बलपटीप्रभृतयः।

अत्र औदयिकतिथिर्ग्राह्या।

पाषाणचतुर्दशी,—

वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्दशी।
तस्यामाराधयेद्देवीं नक्तं पाषाणभक्षणैः॥
ऐश्वर्य्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नरः।

पाषाणाकारपिष्टकमिति जीमूतवाहनः, नक्तमिति वचनान्नक्तकालः प्रधानं, यदा तूभयरात्रौ चतुर्दश्याः सम्भवः, तदा परदिने पूजादिकं कार्य्यम्।

वकुलामावास्या,—

पौषे तु वकुलक्षीरपायसैस्तर्पयेत्-पितॄन्।

अमावास्यायामित्यर्थः।

पौषे मासि यदा विप्र! शुक्लाष्टम्यां बुधो भवेत्।
तदा तस्यां महापुण्या महो भद्रेति कीर्त्तयेत्॥
तस्यां स्नानं तथा दानं तर्पणं विप्रभोजनम्।
सुप्रीतये कृतं देवि! शतसाहस्रिकं भवेत्॥

पुष्यवन्दापना,—

इदं जगत्-पुरा लक्ष्मीत्यक्तमासीत्तदा हरिः।
पुरन्दरश्च सोमश्च तथा शुक्रबृहस्पती॥

पश्यैते पुष्ययोगेन पौर्णमास्यां तपोबलात्।
अलङ्कृतं पुनश्चक्रुः सौभाग्योत्साहलक्ष्मिभिः॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये।
धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैश्च शोभितान्॥
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम्।
पुष्ययोगेषु कर्त्तव्यं राज्ञां स्नानञ्च सर्व्वदा॥

पुष्ययोगेनेति वचनान्नक्षत्रमात्रे पूजावन्दापनादिकं कार्य्यम्।

नक्षत्रद्वैधे,—

उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रतदानयोः।
दिनद्वये तथात्वे तु पूर्व्वं स्याद्बलवत्तरम्॥

घृतकम्बलं,—

आलिङ्गं वेदिपर्य्यन्तं यो दद्याद्-घृतकम्बलम्।
जागरं नृत्यगीताद्यैः सक्तत्-कृत्वा तु पर्व्वणि॥
मन्वन्तरसहस्राणि शिवलोके महीयते।

पर्व्वणि मकरसंक्रान्तौ।

माघकृष्णचतुर्दशी,—

माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी।
तस्यामुदयवेलायां स्नातो नावेक्षते यमम्॥
माघे मासि रटन्त्यापः कृष्णपक्षे चतुर्दशीम्।
ब्रह्मघ्नमपि चण्डालं कम्पतन्तं पुनीमहे॥
अरुणोदयवेलायामारटन्त्यपि नित्यशः।
नियुक्ता विष्णुना सर्व्वाः कस्य पापं पुनीमहे॥

यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम्।
यमुनायां विशेषेण नियतस्तर्पयेत्-पुमान्॥

उभयत्र अरुणोदयव्याप्तौ पूर्व्वदिने कार्य्यम्। पूर्व्वदिनस्य पूर्णतिथित्वात्। अरुणोदयकाले मुहूर्त्तान्यूनतिथिलाभ एव स्नानम्। उत्तरत्र तु घटिकालाभे कार्य्यम्,—

व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।
उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी॥

माघस्नानचतुर्दशीस्नानयोः काम्ययोः देशकालकर्त्रैक्यात्तन्त्रेण सदानुष्ठानम्। स्नानाङ्गानां तु दर्शपौर्णमासयोस्तन्त्रेणानुष्ठाने प्रयाजाद्यङ्गवत् सङ्कल्करणम्।

वरदाचतुर्थी,—

माघकृष्णचतुर्थ्यां तु गौरीमाराधयेद्-बुधः।
चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता॥
सौभाग्यमतुलं कुर्य्यात्-पञ्चम्यां श्रीरपि श्रियम्॥ इति।

अत्र त्रिमुहूर्त्तव्यापिनी तिथिर्ग्राह्या।

गौर्य्याः शुक्लजयाऽप्यस्तु नागविद्धा निषिध्यते।

श्रीपञ्चमी,—

पञ्चम्यां कुन्दकुसुमैः पूज्या कौन्दी समृद्धये।

कौन्दी सरस्वती। "पञ्चम्यां श्रीरपि श्रिय"मित्यत्र श्रीकामः पञ्चम्यां सरस्वतीपूजां कुर्य्यात्। अत्र रात्रौ पूजा क्रियते समाचारात्।

प्रथमप्रहरव्यापिनी ग्राह्या।

माघसप्तमी,—

सूर्य्यग्रहणतुल्या हि माघमासस्य सप्तमी ।
अरुणोदयवेलायां स्नानं तस्यां महाफलम् ॥
माघे मासि शिते पक्षे सप्तमी कोटिभास्करा ।
दद्यात् स्नानार्घ्यं दानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥

यत्र पूर्व्वापरयोररुणोदये सप्तमी, तत्र पूर्व्वारुणोदयकाले स्नानम् ।

स्नानमन्त्रः,—

यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ॥
सूर्य्याय फलगन्धार्कपत्ररक्तप्रसूनकैः ।
दद्यादुत्थाय तत्रार्घं सप्तधा यदि वा त्रिधा ॥
माघे मासि शिताष्टम्यां सलिलं भीष्मवर्म्मणे ! ।
श्राद्धं च ये सदा कुर्य्युस्ते स्युः सन्ततिभागिनः ॥
अष्टम्यां तु शिते पक्षे भीष्माय तु तिलोदकम् ।
अन्नं च विधिवद्दद्युः सर्व्वे वर्णा द्विजातयः ।

सर्व्वे वर्णा इति ब्राह्मणादयश्चत्वारः ।

द्विजातय—इति सम्बोधनम् ।

ब्राह्मणस्त्वन्यवर्णानां यः करोत्यौर्द्धदेहिकम् ।
तद्वर्णत्वमसौ याति इह लोके परत्र च ॥

इति भीष्मकृत्येतरपम् ।

ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम्।
संवत्सरकृतं पुण्यं तेषां नश्यति सत्तम!॥

इति फलश्रवणात्।

वसून् रुद्रान् तथाऽदित्यान् नमस्कारस्वधान्वितान्।
एते सर्व्वस्य पितर एष्वायत्ताश्च मानुषाः॥

इति वचनेन वसुमध्यपातिनो भीष्मस्य सर्व्वपितृत्वादित्याशयः।

तर्पणमन्त्रः—

वैयाघ्रपद्यसगोत्राय शाङ्कृतिप्रवराय च।
अपुत्राय ददाम्येतत्-सलिलं भीष्मवर्म्मणे॥

एकोद्दिष्टत्वादेकोद्दिष्टश्राद्धकाले कर्त्तव्यम्।

भैम्येकादशी,—

माघे मासि शिते पक्षे पुष्यर्क्षेण युता पुरा।
एकादशी तथा चैव भीमेन समुपोषिता॥
अक्षयंस्तुव्रतं कृत्वा पितॄणामनृणो भवेत्।
भैम्येकादशी विख्याता प्राणिनां पुण्यवर्द्धिनी॥
नक्षत्रेण विनोपोष्या ब्रह्महत्यां व्यपोहति॥

भीमद्वादशी,—

मृगशिरे शशधरे माघे मासि प्रजापते।
एकादश्यां शिते पक्षे सोपवासो जितेन्द्रियः॥
द्वादश्यां षट्तिलाचारं कृत्वा पापात्-प्रमुच्यते।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी॥

तिलदाता च भोक्ता च षट्तिली नावसीदति ।
सकृत्तु षट्तिली भूत्वा सर्व्वपापात्-प्रमुच्यते ॥
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

तैलग्रहणे दोषमाह ।

उपोष्यैकादशीं माघे तैलाभ्यङ्गः कृतस्त्वया ।
द्वादश्यां प्राग्भवे(१)देवं तेन व्याघ्रमुखो भवान् ॥

वङ्कुरोत्सवपौर्णमासी,—

वङ्कुरोत्सवे शिते पक्षे माघे मास्यार्द्रभे निशि ।
द्वादश्यां पञ्चदश्यां वा भवेद्वङ्किमहोत्सवः ॥

शिवरात्रिचतुर्दशी,—

संयोगपृथक्त्वेन नित्यं काम्यं च, तत्र नित्यत्वमकरणे प्रत्यवायश्रवणात् ।

परात्परतरं नास्ति शिवरात्रिव्रतात्-परम् ।
न पूजयन्ति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेण भ्रमते नात्र संशयः ।

वीप्सा च ।

वर्षे वर्षे महादेवि ! नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥

नित्यनिश्चलशब्दोऽपि,—

माघकृष्णाचतुर्दश्यां यः शिवं संश्रितव्रतम् ।
मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम् ॥

---

(१) यद्भवेदेवम् ।

अर्णवो यदि वा शुष्येत् क्षीयते हिमवानपि।
मेरुमन्दरलचाश्च श्रीशैलो विन्ध्य एव च॥
चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतमिति।
एवमेतद्व्रतं कुर्य्यात्-प्रतिसंवत्सरं व्रती॥
द्वादशाब्दिकमेव स्याच्चतुर्विंशतिकं तथा।
सर्व्वान् कामानवाप्नोति प्रेत्य चेह च मानवः॥
शिवरात्रिव्रतं नाम सर्व्वपापप्रणाशनम्।
आचण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्॥
शिवं च पूजयित्वा यो जागर्त्ति च चतुर्दशीं।
मातुः पयोधररसं न पिबेत् स कदाचन।

तत्र व्रत-स्वरूपं उपवासः पूजा जागरणं चेति त्रिविधम्।

तथोक्तं,—

उपवासप्रभावेन तथा चैवात्र जागरात्।
शिवरात्रौ तथा शम्भोर्लिङ्गस्यात्र प्रपूजया॥
अक्षयांल्लभते लोकान् शिवसायुज्यमाप्नुयात्।
स्वयञ्च लिङ्गमभ्यर्च्य सोपवासप्रजागरः॥
अजानन्नपि निष्पापो निषादो गणतां गतः।

केवलोपवासोऽपि पठ्यते।

अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत्।
सर्व्वान् कामानवाप्नोति रुद्रेण सह मोदते॥

तथा केवलजागरणमपि।

कश्चित्-पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥

केवलपूजा च ।

यः पूजयति भक्त्येशमनेकफलतां व्रजेत् । इति

अथवा शिवरात्रञ्च पूजाजागरणैर्नयेदिति, अशक्तविषयम् । वैश्वानरद्वादशकपालन्यायेन अवयववाक्यानामवयुत्यानुवादत्वेनोपपन्नत्वात्समुदाय एव व्रतस्वरूपमिति सिद्धान्तः । परन्तु फलश्रवणात्केवलोपवासादि क्रियते, समाचारोऽपि तथा । अत्र तिथिः प्रदोषनिशीथोभयव्यापिनी ग्राह्या ।

तदुक्तं,—

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
माघकृष्णचतुर्दश्यां महादेवो महानिशि ॥
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ।
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ॥ इति,

तथाच,—पूर्व्वेद्युरेव प्रदोषनिशीथोभयव्याप्तौ पूर्व्वेद्युरेव, परेद्युस्तदुभयव्याप्तौ परेद्युरेव, उभयत्र निशीथव्याप्तौ परेद्युरेव ।

निशाद्वये चतुर्दश्यां पूर्व्वा त्याज्या परा शुभा ।

इति प्रदोषनिशीथोभयव्याप्तेः । पूर्व्वेद्युर्निशीथव्याप्तिः परेद्युः, प्रदोषव्याप्तिश्चेत् पूर्व्वेद्युरेव व्रतम् ।

जयन्ती शिवरात्रिश्च कार्य्या भद्रा जयान्विते ।
तथा श्रावणी दुर्गनवमी तथा दुर्व्वाष्टमी च या ।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति,

तथा,—

अर्द्धरात्रात्-पुरस्ताच्चेज्जयायोगोऽवगम्यते।

पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः॥ इति,

यदा पूर्व्वेद्युर्निशीथादूर्द्धं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशान्निशीथादर्व्वागेव समाप्ता, तदा पूर्व्वेद्युः प्रदोषनिशीथोभयव्याप्तेरसम्भवात् परेद्युः, प्रदोषव्याप्तेरेकस्याः सम्भवाच्च परविद्धैव ग्राह्या।

तदुक्तं,—

माघासिते भूतदिनं कदाचिदुदेति योगं यदि पञ्चदश्या।

जयाप्रयुक्तां न तु जातु कुर्य्याच्छिवस्य रात्रिः प्रियकृच्छिवस्येति॥

यदा पूर्व्वेद्युः प्रदोषादूर्द्धं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशात्-प्रदोषादर्व्वागेव समाप्ता परेद्युर्व्याप्तिद्वयाभावात् पूर्व्वेद्युर्निशीथव्याप्तेः सद्भावाज्जयायोगाच्च पूर्व्वेद्युरेवोपवासः। तत्रायं विवेकः। दिनद्वये निशीथव्याप्तौ तदव्याप्तौ वा प्रदोषव्याप्तिर्नियामिका, दिनद्वये प्रदोषव्याप्तौ च निशीथव्याप्तिर्नियामिका, एकैकस्मिन् दिने एकैकव्याप्तौ जयायोगो नियामक इति।

अथ तिथित्रयं वेदतिप्रशस्तम्,—

त्रयोदशीकलाऽप्येका मध्ये चैव चतुर्दशी।

अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत्॥

तथा वारविशेषेण योगविशेषेण च प्रशस्ता भवति।

माघ-कृष्ण-चतुर्दश्यां रविवारो यदा भवेत्।

भौमो वाऽप्यथवा देवि! कर्त्तव्यं व्रतमुत्तमम्।

शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तमम्॥ इति,

## अथ पारणम्।

उपोषणं चतुर्द्दश्यां चतुर्द्दश्याश्च पारणम्।
कृतैः सुकृतलक्षैश्च लभ्यतेऽप्यथवा न वा॥
तिथीनामेव सर्व्वासामुपवासव्रतादिषु।
तिथ्यन्ते पारणं कुर्य्याद्विना शिवचतुर्द्दशीम्॥

तत्र,—

उपवासेषु सर्व्वेषु पूर्व्वाह्णे पारणं भवेत्।
तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते॥
यामत्रयोर्द्ध्ववर्त्तिन्यां प्रातरेव हि पारणम्।

तेन यदा यामत्रयादर्व्वागेव चतुर्द्दशी समाप्यते तदा तिथ्यन्ते पारणम्। यदा चतुर्द्दशी यामत्रयमतिक्रामति, तदा चतुर्द्दशीमध्ये पारणं कुर्य्यात्।

तदुक्तं माधवाचार्य्यैः,—

तिथ्यन्ते पारणं यामत्रयादर्व्वाक्समापने।
अन्यथा पारणं प्रातरन्यतिथ्युपवासवत्॥ इति

दोलायात्रा,—

नरो दोलागतं दृष्ट्वा गोविन्दं चिदशार्चितम्।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्॥
फाल्गुने पौर्णमास्यान्तु कार्य्यः फल्गुमहोत्सवः।
गोविन्दो दोलया क्रीड़ेत्तत्र फल्गुगते रवौ॥

फल्गुः, उत्तरफल्गुनी।

चैत्रकृष्णचतुर्दशी,--

चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ।
गङ्गायां च विशेषेण न स प्रेतोऽभिजायते॥
चैत्रकृष्णचतुर्दश्यामङ्गारकदिनं यदि।
स पिशाचः पुनर्न स्याद्-गङ्गायां स्नानभोजनात्॥

---

## अथ संक्रान्तिनिर्णयः।

मृगकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने।
विषुवती तुलामेषे विष्णुपद्यः स्थिरात्मके॥
षडशीतिर्द्विशरीरे द्वादशैवं प्रकीर्त्तिताः।

मृगो मकरः, स्थिरा वृषसिंहवृश्चिककुम्भराशयः, विष्णुपद्यः, द्विशरीरा मिथुनकर्कटधनुर्मीनाः षडशीतिसंज्ञकाः।

तदुक्तं,—

अयने द्वे विषुवे द्वे चत्वारः षडशीतयः।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः॥
त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे।
संक्रान्तिसमयः सूक्ष्मो दुर्लक्ष्यः पिशितेक्षणैः॥
तद्योगश्चाप्यधश्चोर्द्धं त्रिंशन्नाड्यः प्रकीर्त्तिताः॥

इदञ्च तैलस्त्रीमांसवर्ज्जनोपवासादिविषयम्।

पुण्यकालमाह,—

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः परा ।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥
षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः ।
पुण्यायां विष्णुपद्याञ्च प्राक्पश्चादपि षोडश ॥
अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।
रात्रौ संक्रमणे पुण्यं दिनार्द्धं स्नानदानयोः ॥
ऊर्द्धं संक्रमणे पुण्यमुदयात्प्रहरद्वयम् ।
सम्पूर्णे चेदर्द्धरात्रे रविसंक्रमणं भवेत् ॥
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ।
मानार्द्धे भास्करे पुण्यमपूर्णे शर्व्वरीदले ।
सम्पूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि ॥

भास्करे भास्करोपलक्षितदिवसे संक्रमणे मानार्द्धं प्रहरद्वयं पुण्यम् ।

अपूर्णे शर्व्वरीदले कलान्यूनार्द्धरात्रके ।

सम्पूर्णे तूभयोः पूर्व्वापरदिनयोः मानार्द्धं पुण्यं, अतिरेकेऽर्द्धरात्रात्परतः संक्रमणे परेऽहनि मानार्द्धं पुण्यमित्यनुषज्यते ।

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयश्चापरेऽहनि ॥

इति वचनात् संक्रान्तिकालीनतिथेः, पूर्व्वदिनगामित्वे पूर्व्वदिने पुण्यकालः, तिथिभेदे उत्तरदिने पुण्यकालः । तेन अर्द्धरात्रे संक्रान्तौ आदौ पूर्व्वदिन एव मानार्द्धं, यद्यभिन्ना संक्रान्ति-

काले पूर्व्वदिने च एकैव तिथिर्भवेत्। तेन अर्द्धरात्रसंक्रमणे यदुभयमानार्द्धं पुण्यमुक्तं तद्भिन्नतिथिविषयं, अतीते पुनरर्द्धरात्रे पूर्व्वेणाङ्का तिथ्यभेदेऽपि परस्य पूर्व्वार्द्धं पुण्यमिति तात्पर्य्यार्थः

मकरकर्कटयोर्विशेषः,—

यद्यस्तमनवेलायां मकरं याति भास्करः ।
प्रदोषे त्वर्द्धरात्रे वा स्नानदाने परेऽहनि ॥
कार्म्मुकन्तु परित्यज्य झषं संक्रमते यदा ।
प्रदोषे त्वर्द्धरात्रे वा स्नानदाने परेऽहनि ॥
अर्द्धरात्रे तदूर्द्धं वा संक्रान्तौ दक्षिणायने ।
पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥
मिथुनात्-कर्किसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्य्यादहनि पूर्व्वतः ॥

एतच्च कल्पतरुकारेण अनादृतमिति द्वादशसंक्रान्तिष्वपि एकैव व्यवस्था क्रियते। तथापि प्रामाणिकैर्लिखितमिति लिखितम् ।

रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः ।
सप्तजन्मन्यसौ रोगी निर्द्धनश्चापि जायते ॥
अयने कोटिगुणितं लक्षं विष्णुपदीफलम् ।
षडशीति सहस्रं (१) तु सविषुवमुदाहृतम् ॥
संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि तेषां ददात्यर्कः पुनर्जन्मनि जन्मनि ॥

(१) षडशीत्यामुदाहृतम् ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।
अहोरात्रोषितः स्नातः सर्व्वपापैः प्रमुच्यते ॥

अत्र गृहस्थेतरेषामुपवासः ।

आदित्येऽहनि संक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा सदा ॥

---

## अथ चैत्रमासकृत्यम् ।

चैत्रन्तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्यकुले महति जायते ॥

अत्र केवलैकभक्तस्य व्रतत्वेनाभिधानादेकभक्तकालेन मास-व्यवस्था कार्य्या । "कर्म्मणो यस्य यः काल" इति वचनात् ।

मासि सम्वत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरोत्तमा ग्राह्या पूर्व्वा तु स्यान्मलिम्लुचः ॥

मासादितिथेः सम्वत्सरादितिथेश्च तिथिद्वैधे उत्तरविद्धा ग्राह्या । अत्र चान्द्रो मासः पूर्णिमान्तो ग्राह्यः । यथा पूर्णिमान्त-मासस्य ग्राह्यत्वं तत्पूर्व्वमुक्तम् ।

वैशाखमासकृत्यम्,—

वैशाखं यः क्षिपेन्मासमेकभक्तेन मानवः ।
स याति श्रेष्ठतां लोके पूजितो धनवानपि ॥
वैशाखे पुष्पलवणे वर्जयित्वा तु गोप्रदः ।
भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥

अत्र पुष्पवर्जनं निर्म्माल्यव्यतिरिक्तविषयम्। पूजायां निर्म्माल्य-ग्रहणस्य विहितत्वात्।

ज्येष्ठमासकृत्यं,—

ज्येष्ठमूलं तु यो मासमेकभक्तं समाचरेत्।
भ्रातॄणां भवति श्रेष्ठो भोगांश्चाप्नोति पुष्कलान्॥

आषाढ़मासकृत्यं,—

आषाढ़मेकभक्तं तु स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते॥

श्रावणमासकृत्यं,—

श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत्।
यत्र तत्राविशेषेण पूज्यते ज्ञातिवर्द्धनः॥

भाद्रमासकृत्यं,—

प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः।
गवाढ्यस्फीतमतुलमैश्वर्य्यं प्रतिपद्यते॥

आश्विनमासकृत्यं,—

तथैवाऽश्वयुजं मासमेकभक्तेन यः क्षिपेत्।
प्रजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते॥

कार्त्तिकमासकृत्यं,—

कार्त्तिकं वापि यो मासमेकभक्तेन तिष्ठति।
सोऽश्वमेधफलं प्राप्य वह्निलोके महीयते॥
एकभक्तेन नक्तेन तथैवाऽयाचितेन च।
व्रते कृते धरावासिर्जायते दीपमालिनी॥

सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते ।
क्रियमाणे व्रते नृणां स्वल्पेऽपि च महत् फलम् ॥

व्रतशब्देन यत्किञ्चिन्मत्स्यादिवर्जनसङ्कल्पमात्रं, चान्द्रायणपयोव्रतचतुर्थकालषष्ठकालादिव्रतकरणे फलानन्त्यम् ।

तुलामकरमेषेषु प्रातःस्नानं प्रशस्यते ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

एतत्सौरमासत्रयसाध्यमेकं कर्म्मेति वदति । केवलस्नानेऽपि फलमस्ति ।

यदीच्छेद्विपुलान् भोगान् चन्द्र-सूर्य्यग्रहोपमान् ।
कार्त्तिके सकले मासि प्रातःस्नायी भवेन्नरः ॥
कार्त्तिकस्य तु यत्-स्नानं माघे मासि विशेषतः ।
कृच्छ्रादिनियमानाञ्च चान्द्रमानं प्रशस्यते ॥

आरब्धे स्नाने व्याध्यादिना असामर्थ्ये धर्म्मप्रतिग्रहरूपेण पुत्रादिना कारयेत्, दक्षिणादानपूर्व्वकं ब्राह्मणादिना वा ।

कार्त्तिकं सकलं मासं वहिःस्नायी जितेन्द्रियः ।
जपन् हविष्यभुग्दान्तः सर्व्वपापैः प्रमुच्यते ॥

कार्त्तिकोऽग्निदैवत्यः अग्निश्च सर्व्वदेवानां मुखं, कार्त्तिके मासि वहिःस्नायी गायत्रीजप्यनिरतः सकृदेव हविष्याशी सम्वत्सरकृतात्पापात्पूतो भवतीति । सकलमिति मासादितिथिः पूर्व्वविद्धा ग्राह्या ।

कर्म्मणो यस्य यः कालः सा तिथिस्तदुपक्रमे ।
इति वचनात् ।

तथाच तदुपक्रमयोग्यकाललाभे तदुपक्रमः कार्य्यः। वह्निर्नद्यादौ स्नानं कार्य्यं, तेन प्रातःकालादन्यत्रापि स्नानं कार्य्यम्।

यद्यपि—

कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन!।
प्रीत्यर्थं तव देवेश! दामोदर! मया सह॥

इति स्नानमन्त्रे प्रातःशब्दो वर्त्तते। तथापि प्रातःशब्दस्य दिवसवाचित्वं, काम्यत्वेन सम्ध्योत्तरं कार्य्यत्वात्। तेन सर्व्वाङ्गोपसंहारस्य न्याय्यत्वाद्बहुतस्नानादेरवकाशः। अतएव वह्निःस्नानमप्युक्तम्। काम्यत्वेन सर्व्वाङ्गजलसंयोगरूपस्य स्नानस्य न्याय्यत्वात्। माघस्नानस्य काम्यत्वेऽपि अरुणोदये विधानात् सम्ध्यातः पूर्व्वं प्रातःस्नानेन सह तन्त्रेणानुष्ठानं यत्र, तथा समुदितस्य व्रतत्वात्, तेन वह्निःस्नानगायत्रीजपहविष्येतरभोजननिवृत्तिरूपं व्रतं, जपश्च लक्षपरिमितः कार्य्यः।

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः।
गायत्री जप्यनिरतो मुच्यते सत्प्रतिग्रहात्॥

अथवा प्रतिदिनं सहस्रपरिमितः कार्य्यः।

सहस्रकृत्वस्त्वभ्यस्य वह्निरेतत्त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाऽहिर्विमुच्यते॥

वह्निरन्यागारादौ, ग्रामाद्बहिरिति केचित्, जपश्च द्वेधा।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥

तेन दशप्रणवसमव्याहृतिभिरःसहितायाः गायत्र्या जप एकः।

अपरञ्च,—

ॐकारं पूर्व्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च ।

गायत्रीं प्रणवं चान्ते जपे ह्येवमुदाहृतम् ॥

हविष्यभुक् इत्यनेन हविष्येतरभोजननिवृत्तिर्लभ्यते। न च त्रिदोषदुष्टा परिसंख्या ।

फलतः परिसंख्यायां त्रैदोष्याभावात्। तेन भोजनस्य रागप्राप्तत्वेन विधानासम्भवाद्भोजने सति हविष्यद्रव्यनियमः।

हविष्यद्रव्याणि यथा,—

हविष्येषु यवा मुख्या तदनु व्रीहयस्तिलाः ।

माषकोद्रवगौरादीन् सर्व्वालाभे विवर्जयेत् ॥

गौरः श्वेतसर्षपः, मुख्याभवे प्रतिनिधि-रिति प्रतिनिधिकरणेऽपि मासादीन् वर्जयेत् ।

यत्तु,—

हैमन्तिकं सिता स्विन्नं धान्यं मुद्गास्तिला यवाः ।

कलायकंगुनीवारवास्तुकं हिञ्चमोचिका ॥

कालेयं कालशाकञ्च मूलकं केमुकेतरत् ।

लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी ॥

पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।

पिप्पली जीरकञ्चैव नागरञ्चैव तिन्तिड़ी ॥

कदलीलवलीधात्रीफलान्यगुड़मैक्षवम् ।

अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥

इति पठन्ति ।

[illegible] Fasc. 1-3 @ 1/ each ...
[illegible] Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... [illegible]
[illegible] of Hashim ... ... ... ... [illegible]
[illegible] of Zaberdast Khan ... ... ... [illegible]
[illegible]-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... 21 0
[illegible]-Tusi, or, Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... 4 0
[illegible] ... ... ... ... ... ... 2 0
[illegible] 'L, Haqiqat, (Text & Eng.) ... ... ... ... 3
History of Gujarat ... ... ... ... ... 1
Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... ... ... 1 14
[illegible]bah, with Supplement, 51 Fasc. @ 1/- each ... ... ... 51 0
Ma'asir-i-Rahimi, Part I, Fasc. 1-8 @ 2/ each ... ... ... 6 0
Ma'asir-ul-Umara, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... 35 0
Ditto (Eng.) Vol. I, Fasc. 1-2, @ 1/4/ each ... ... 2 8
Memoirs of Tahmasp ... ... ... ... ... 1 0
Marhamu 'L-Ilali 'L-Mu'Dila Fasc. 1-2 ... ... ... ... 2 0
Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... ... ... 9 6
Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... 16 0
Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... ... ... 11 14
Ditto Part 3, Fasc. 1-2 @ 1/- each ... ... ... 1 [illegible]
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... ... 0 10
Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 @ /12/ each ... ... 1 8
Persian and Turki Divans of Bayran Khan, Khan Khanan ... ... 1 0
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... 5 0
Riyazu-s-Salatin, Fasc. 1-5 @ /10/ each ... ... ... ... 3 2
Ditto (English) Fasc. 1-5 @ 1/ ... ... ... 5 0
Shah Alam Nama ... ... ... ... ... 1 14
Tazkira-i-Khushnavisan ... ... ... ... ... 1 0
Tabaqat-i-Nasiri, (English), Fasc. 1-14 @ 1/- each ... ... 14 0
Ditto Index ... ... ... ... ... 1 0
Tarikh-i-Firuz Shahi, of Ziyau-d-din Barni Fasc. 1-7 @ /10/ each .. 4 6
Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif, Fasc. 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... ... 3 0
Tuhfatu 'L Mabani 'L Lughat: A Grammar of the Turki Language in Persian 1 8
Tuzuk-i-Jahangiri, (Eng.) Fasc. 1 @ 1/ ... ... ... ... 1 0
Wis-o-Ramin, Fasc. 1-5 @ /10/ each ... ... ... ... 3 2
Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

Asiatic Researches. Vols. XX @ 10/ each ... ... 20 0
Proceedings of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No.
Journal of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/- per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock.) @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
Centenary Review of the Researches of the Society from 1784-1883 ... [illegible]
Catalogue of the Library of the Asiatic Society, Bengal, 1910, [illegible]
Moore [illegible]witson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... [illegible]
[illegible], Parts I & II @ 1/8/ ... ... [illegible]
Persian Translation of Haji Baba of Ispahan by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott.

---

[illegible] of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ...
[illegible] Buddhist Sanskrit Literature, by Dr. R. L. Mitra
[illegible] Cheques, Money Orders, etc. must be made payable to the [illegible]

| | | |
|---|---|---|
| ... Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | |
| ... of Hashim ... ... ... | 1 | |
| ... of Zubardast Khan ... ... ... | 1 | |
| ...-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... | 21 | 0 |
| ...-Tusi, or, Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... | 4 | 0 |
| ... ... ... ... ... ... | 4 | 0 |
| Haqiqatu'L, Haqiqat, (Text & Eng.) ... ... ... ... | 2 | 0 |
| History of Gujarat ... ... ... ... | 3 | |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 1 | |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Isabah, with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'asir-i-Rahimi, Part I, Fasc. 1-8 @ 2/ each ... ... ... | 6 | 0 |
| Maasir-ul-Umara, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Ditto (Eng) Vol. I, Fasc. 1-2, @ 1/4/ each ... ... | 2 | 8 |
| Memoirs of Tahmasp ... ... ... ... ... | 1 | 0 |
| Marhamu 'L-Ilali 'L-Mu'Dila Fasc. 1-2 ... ... ... ... | 2 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... ... ... | 9 | 6 |
| Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... | 16 | 0 |
| Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1-2 @ 1/- each ... ... ... | 1 | ... |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... ... | 0 | 10 |
| Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 @ /12/ each ... ... | 1 | 8 |
| Persian and Turki Divans of Bayram Khan, Khan Khanan ... ... | 1 | 0 |
| Qawanin-u-s-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... | 5 | 0 |
| Riyazu-s-Salatin, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 @ 1/ ... ... ... | 5 | 0 |
| Shah Alam Nama ... ... ... ... ... | 1 | 14 |
| Tadhkira-i-Khushnavisan ... ... ... ... ... | 1 | 0 |
| Tabaqat-i-Nasiri, (English), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index ... ... ... ... ... | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... ... | 3 | 0 |
| The Mabani 'L Lughat: A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahangiri, (Eng.) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Ramin, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc 1-8 @ /10/ each ... ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | |
|---|---|---|
| ASIATIC RESEARCHES. Vols. XX @ 10/ each ... ... | 20 | 0 |

PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No

JOURNAL of the Assiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

N. B.—*The figures enclosed in brakets give the number of Nos. in each Volume.*

Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.

Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members.

Centenary Review of the Researches of the Society from 1784-1883

Catalogue of the Library of the Asiatic Society, Bengal, 1910.

[illegible] ...witson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each

...raksabdasmrta, Parts I & II @ 1/8/

Persian Translation of Haji Baba of Ispahan by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott.

... of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ...

... Buddhist Sanskrit Literature, by Dr. R. L. Mitra

... Cheques, Money Orders, &c. must be made payable to the ... only.

# विश्वहितम् ।



राजकीय ज्योतिषिणा

पण्डित श्रीविश्वम्भर ज्योतिषार्णवेन

तथा तत्पुत्रेण

पण्डित श्रीशचन्द्र ज्योतीरत्नेन

संशोधितम्

एसियाटिक सोसाइटी द्वारा

प्रकाशितम् ।

कलिकाता राजधान्यां बाप्टिस्ट-मिशन-यन्त्रे मुद्रितम्

शकाब्दाः १८३४